ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUATERLY RESEARCH JOURNAL)

३६ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०११ ई०

प्रधानसम्पादकः

प्रो० उषारानीकपूर

कुलपतिः (प्रभारी)

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः

सहसम्पादकः

डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

## (A REFEREED QUATERLY RESEARCH JOURNAL)

३६ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०११ ई०

प्रधानसम्पादकः

**प्रो० उषारानीकपूर**

कुलपतिः (प्रभारी)

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**



प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

प्रधानसम्पादकः

**प्रो० उषारानीकपूर**

कुलपतिः (प्रभारी)

**सम्पादकः**

प्रो० रमेशकुमारपाण्डेयः

**सम्पादकमण्डलम्**

प्रो० (श्रीमती) अमिता शर्मा

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# आत्मनिवदेन

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठ के शोध-प्रकाशन विभाग द्वारा प्रकाशित शोध-प्रभा शोधपत्रिका के प्रस्तुत अंक को पाठकों के समक्ष प्रस्तुत करते हुए मुझे हार्दिक प्रसन्नता हो रही है।

वस्तुत: अच्चशिक्षा में शोध की बड़ी भूमिका है। शोध द्वारा जहाँ वैज्ञानिक नवीन-नवीन यन्त्रों एवं प्रविधियों की खोज कर मानव जीवन की जटिलता को दूर करने का प्रयास करता है। वहीं दर्शनादि क्षेत्रों में शोध करने वाले विद्वज्जन नयी-नयी व्याख्याओं द्वारा मानव के ज्ञान को नया आयाम देते हैं।

आज के इस वैज्ञानिक युग में विज्ञान की सहायता से प्रत्येक क्षेत्र लाभान्वित हुआ है। फलत: शिक्षा का क्षेत्र भी इससे प्रभावित है। संगणक के प्रयोग से शोधकर्त्ता को कई प्रकार से लाभ पहुँचा है। आज सारे विश्व में चल रही शोध की योजनाओं एवं परिणाम से शोधकर्त्ता अपने संगणक से सीधी जानकारी प्राप्त कर लेता है जबकि कुछ वर्षों पहले यह कितना कठिन कार्य था। दूर देश में विद्यमान शोधसामग्री का सहजता से उपयोग करने का द्वार तो संगणक के माध्यम से उद्घाटित हुआ है। आजकल विद्यापीठ के छात्र अपनी शास्त्रीय परम्पराओं की रक्षा के साथ-साथ संगणक शिक्षा में भी रुचि रखते हैं, यह नितान्त प्रसन्नता की बात है।

प्राच्य विद्या के क्षेत्र में निरन्तर स्वाध्यायशील तत्त्वजिज्ञासुओं के लिए यह शोध-प्रभा निरन्तर उपादेय सिद्ध हो, यही मेरी कामना है।

**प्रो. उषा रानी कपूर**
कलपति (प्रभारी)

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

अनुसन्धाने मौलिकं यत् कार्यम्भवति तदेव अनुसन्धानकर्त्तुः वैशिष्ट्यं प्रकाशयति, तदेव वस्तुतोऽवदानं योगदानं वा भवति कस्यचित् शोधकर्त्तुः। तदेवावदानमङ्गीकृत्य तत्तत्क्षेत्रे अनुसन्धानकर्त्तारो विषयविशेषज्ञाः तमुदाहरन्ति निर्दिशन्ति च तस्य सिद्धान्तं नवीनाख्यानं वा। अतो मौलिकतैवानुसन्धानतत्त्वेषु मूर्ध्नि स्थिता दृश्यते। तन्मौलिकत्वमपि प्रतिपादनकौशलमाश्रयते। अतः प्रतिपादननैपुणीमनादृत्य किमपि तत्त्वं सुष्ठुतया प्रतिष्ठितं न भवतीति धिया प्रतिपादनकौशलार्जने प्रयत्नशीला भवन्ति गवेषकाः। यत् वस्तुतः प्रतिपाद्यमस्ति यदि तस्य प्रतिपादनं सुष्ठु रीत्या न विधीयते तस्य प्रभावः विलम्बेन भवति अथवा प्रभाव एव न भवति। विज्ञापनात्मकेऽस्मिन् युगे नवीनस्य कस्यापि सर्वथा समुपादेयस्यापि वस्तुनो यावत् समीचीनं मनोभिरामम् अनितरसाधारणं किमपि विज्ञापनं नैव जायते तावत् तद्वस्तु न कोऽपि प्रयुनक्ति। किन्तु तदपेक्षया हीनस्यापि वस्तुनः मनोहर-विज्ञापनैः आकृष्टाः सहस्रशो जनाः तद्वस्तु प्रयुञ्जन्ति। तात्पर्यमिदमस्ति सुतरामुपादेयस्यापि वस्तुनः प्रतिपादनमपि सुष्ठुतयैव रीत्या करणीयं भवति। येन जनाः सहजतया तस्मात् शोधपरिणामाल्लाभान्विता भवेयुः।

प्रस्तुतीकरणं शोधस्य वस्तुतः प्रविधिमपेक्षते। अयं विधिरेव आङ्ग्लभाषाविद्भिः टेकनीक (Tachnique) पदेनोच्यते। शोधकार्ये सम्प्राप्तानां परिणामानां समुचितमनुशीलनं विधाय सुव्यवस्थितया शोधप्रबधो निबन्धो वा निर्मातव्यः। शोधबन्धसमुपस्थापने प्रायः त्रयो बन्धाः कल्पिता भवन्ति – पूर्वबन्धः, मुख्यबन्धः, पश्चबन्धश्च। पूर्वबन्धे भूमिका, विषयानुक्रमणिका, सङ्केतसूच्याऽदयो विषयाः भवन्ति। मुख्यबन्धे समग्रस्य अनुसन्धानकार्यस्य अध्यायानुसारिणी प्रस्तुतिः अपेक्षिता भवति। पश्चबन्धे च परिशिष्टानि भवन्ति तदन्तर्गतत्वेन ग्रन्थसूच्यादयो विषयाः समुपनिबद्धाः भवन्ति।

शोधप्रभाया अस्मिन्नङ्के विविधविषयविश्लेषपरा द्वादश लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्-भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**

सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः


| | | | |
|---|---|---|---|
| १. | श्रीमद्भागवते मुख्यप्रतिपाद्यताया आकलनम् | प्रो. जयकान्तसिंहशर्मा | १ |
| २. | पाणिनीयतन्त्रे विमृष्टे व्याकरणपदार्थे शास्त्रीयो दृष्टिनिक्षेपः | डॉ. रामनारायणद्विवेदी | १० |
| ३. | वास्तुशास्त्रानुसारं ग्राम-नगरवास-विचारः | डॉ. सुभाषचन्द्रमिश्रः | १७ |
| ४. | ज्योतिषशास्त्रे स्वप्नविचारः | डॉ. भारतभूषणमिश्रः | २२ |
| ५. | योगदर्शनस्य दर्शनान्तरेभ्यो वैशिष्ट्यम् | डॉ. रविशङ्करशुक्लः | ३१ |
| ६. | भिन्नागमदर्शनेषु कालस्वरूपम् | श्रीसच्चिदानन्दमिश्रः | ३४ |
| ७. | काव्यालङ्कारकारिकाख्ये ग्रन्थे प्रतिभाविमर्शः | कमलेश रानी | ४१ |
| ८. | कालिदाससाहित्ये वैदिकानुष्ठानमहत्त्वम् | प्रो. रमेशकुमारपाण्डेयः | ४६ |
| ९. | वैदिकसाहित्ये आयुर्विज्ञानम् | डॉ. सुन्दरनारायणझा | ५१ |


## हिन्दी विभाग


| | | | |
|---|---|---|---|
| १०. | 'अनुपसर्जनात्' सूत्र एक अनुशीलन | श्री रामकरण | ५८ |
| ११. | काशकृत्स्नव्याकरण और उनका संज्ञाप्रकरण | डॉ. रविन्द्र कुमारी | ६५ |
| १२. | विश्व भाषा-दर्शन को भारतीय दार्शनिकों का अद्भुत योगदानः स्फोटवाद | डॉ. रणजीत कुमार मिश्र | ७६ |

# श्रीमद्भागवते मुख्यप्रतिपाद्यताया आकलनम्

प्रो. जयकान्तसिंहशर्मा

क उपायो भगवत्प्राप्तेः को मन्था संसारमहोदधेः किं वामृतोपलब्धेर्निदानमिति निश्चेतुमसमर्थानां भववारिधौ प्रवहतां देहिनां दयनीयदशां दर्शं दर्शं करुणावशंवदो भगवान् निजपुरातनज्ञानराशिप्रकाशाय व्यासरूपेणावतीर्य पुराणादिकं च प्रकटय्य वेदं समुपबृंहयति। तादृशपुराणेष्वन्यतमं श्रीमद्भागवतं प्रतिपदं भक्तिनिरूपकत्वेन वैष्णवानां धनमिति भगवता बादरायणेनापि समुदीरितम्[१]। अत्र सत्कर्मकलिन्दजां सज्ज्ञानसरस्वतीं चातिशय्य श्रुतिसारसर्वस्वभूता भगवद्भक्तिभागीरथी उत्तरला भूत्वा प्रवहति। भक्तियोगाविष्कारेण हि सामान्यलोककल्याणाय व्यासेन श्रीमद्भागवतशास्त्रमाविष्कृतम्। यथोक्तम्–

**अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे।**
**लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम्॥**[२]

पारे वाचामस्ति माहात्म्यं भगवतस्तद्भक्तेश्च, अस्य पुराणेषु तिलकायमानस्य भक्तिरेव प्रधानप्रतिपाद्यं वस्तु। यच्च सत्यं परं धीमहीत्युपक्रम्य सत्यं परं धीमहीत्युपसंहृत्य च ध्यानोपासनपदवाच्यायां मुख्यविधेयायां भक्तौ पर्यवसीयते। किञ्च भागवतोपक्रमे पुंसामेकान्ततः श्रेयः किमिति[३] पृष्ट्वा "स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे, अहैतुक्यप्रतिहता ययात्मा सम्प्रसीदति[४]" इति समाधिनोपक्रान्तं भागवतं "भवे भवे यथा भक्तिः पादयोस्तव जायते"[५] इत्यनेनोपसंहृतमित्येवमुपक्रमोपसंहारयोः भगवद्भक्त्येकविषयत्वं स्फुटमेव। यत्तु नैष्कर्म्यस्य प्रतिपाद्यत्वादिदं कर्मप्रत्याख्यानपरमिति तन्न "नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः, विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः[६]" इति वचनेन विहितकर्मपरित्यागे दुर्गतिप्रतिपादनाद् भगवदाज्ञाधिया परिपालनस्योपासनरूपत्वाच्च। धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां[७] सतामित्यत्र भागवते कामकैतवरहितो धर्मो भागवतधर्मतया व्यपदिश्यते, किं वा भागवता धर्मा न प्रायेण निरूपिताः, प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः इत्युक्तेः। वस्तुतो मन्वादिमुखेन वर्णाश्रमधर्मानुक्त्वातिरहस्य त्वात्स्वमुखेनैव भगवताऽविदुषामपि जनानां सुखेन स्वप्राप्तये

---

१. श्रीमद्भागवतमहापुराणम् १२-१३-१८
२. श्रीमद्भागवतम् १-७-९
३. श्रीमद्भागवतम् १-१-९
४. तत्रैव १-२-६
५. तत्रैव १२-१३-२२
६. तत्रैव ११-३-४५
७. तत्रैव १-१-२

ये उपाया: प्रोक्तास्त एव भागवतधर्मा:, यानास्थाय भक्तिमनुतिष्ठन् योगादिष्विव न प्रमाद्यति, न स्खलति, न प्रत्यवायी भवति न च फलाद् भ्रश्यति[९]। अतो भागवतधर्मापरपर्याया भक्तिरजिह्मा राजपद्धतिरेव वर्णिता।

भक्तिस्तु परानुरक्तिरीश्वरे, इयममृतरूपा, फलस्वरूपा च। महनीयविषये प्रीतिरेव सेति वैष्णवाचार्या:। ज्ञानविशेषोऽपीति ज्ञानोपायतापरश्रुतीनामविरोध:। इयं सचेतसां भक्तानां चेतांसि विशदयति, अपहरति मलं मलदूषितानां मलिनात्मनाम्, प्रबोधयति विवेकम्, शोधयति स्वान्तम् रोधयति पापपरम्पराम्, अवगमयति भगवत्तत्त्वम्, विग्मयति दुर्गतिम्, संगमयति सद्भावसरणिम्, प्रापयति च भगवत्पादकमलम्, अत उक्तं भागवते भगवता-भक्तिं लब्धवत: साधो किमन्यदवशिष्यत इति[१०]।

भागवतस्य गहनानुशीलनेनेदं गम्यते यदत्रादौ मध्येऽवसाने च भागवती भक्तिरेव परमोपादेयत्वेन सुदृढोपायतया विस्रब्धं निरूप्यते। सत्यपि कर्मज्ञानोपासनानामुपायभावे सकलानर्थनिवृत्तौ परमानन्दावाप्तौ चेयं निदानम्, न केवलं सर्वसाधनेभ्यो भक्ते: श्रेष्ठत्वमपितु भक्तिशून्यानां सर्वसाधनवैफल्यं चात्र वर्ण्यतं। ये जात्या कर्मणा च पापपरायणास्तेषामपि भक्तिमत्समाश्रयणेन परमशुद्धिरुच्यते[११]। भगवद्वशीकरणचूर्णं किलेयं भक्ति:, तथाविधो भगवानपि यद्वशीकृत: "अहं भक्तपराधीन:[१२]" इति वक्तुं न जिह्रेति, यामाश्रित्य भक्तो भगवन्तमपि स्वप्रणयरशनया पतिव्रता सत्पतिमिव वशंवदीकरोति[१३]। सर्वभूतेषु समं समदृशमपि तं भक्तैकपक्षपातिनं करोति[१४]। आत्मसमर्पणभक्तिपारतन्त्र्यादेव भगवानात्मानं बलेर्गदापाणिद्वारपालत्वेन परिकल्प्य नियुक्तवान्[१५], बभाण च स्वयं स्वभक्तस्य त्यागानर्हतां सहेतुकम्।

---

८. तत्रैव १-४-३१

९. श्रीमद्भा ११-२-३५

१०. श्रीमद्भा ११-२६-३०

११. श्रीमद्भा २-४-१८

१२. श्रीमद्भा ९-४-६३

१३. मयि निर्बद्धहृदया: साधव: समदर्शना:।
वशीकुर्वन्ति मां भक्त्या सत्स्त्रिय: सत्पतिं यथा।। (९-४-६६)
विसृजति हृदयं नं यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाश:।
प्रणयरशनया धृताङ्घ्रिपद्म: स भवति भागवतप्रधान उक्त: (११-२-५५)

१४. (क) सर्वात्मन: समदृशो ह्यद्वयस्यान्हंकृते:।
कृतं मतिवैषम्यं निरवद्यस्य न क्वचित्।।
तथाप्येकान्तभक्तेषु पश्य भूतानुकम्पितम्।
मेऽसूंस्त्यजत: साक्षात्कृष्णो दर्शनमागत:।। (११-२-५५)
(ख) सर्वात्मन: समदृशो विषम: स्वभावो।
भक्तप्रियो यदसि कल्पतरूस्वभाव:।। (श्रीमद्भा ८-२३-८)

१५. रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम।
सदासन्निहितं वी तत्र मां द्रक्ष्यते भवान्।। (८-२२-३५)
नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम।। (श्रीमद्भा ८-२३-१०)

**ये दारागारपुत्राप्तान् प्रणान् वित्तमिमं परम्।**
**हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे[१६]।।**

भगवतोऽयं कश्चिद् दिव्यकल्याणगुणाकर्षणप्रकर्ष एव यदीयचुम्बकीयशक्त्याकृष्टचेतसो निर्ग्रन्थाः परमहंसा मुक्ता अपि अहैतुकीं तद्भक्तिं कुर्वन्ति[१७]। निवृत्तसकलैषणानां तथाविधपरमहंसानां भक्तियोगे प्रवर्तनाय भगवतोऽवतार इत्याह कुन्ती[१८]। नूनं ज्ञानोत्तरा काचिदियं भक्तिः, या तच्चरणारविदसौरभजन्यदिदृक्षारूपेण परिणता सनकादिषु लब्धोदया अक्षरजुषामपि (स्वरूपानन्दमग्नानामपि) तेषां शरीरं रोमाञ्चेन समुत्कण्ठया च चित्तं क्षोभयति[१९]। एतेन स्वरूपानन्दादपि भजनानन्दस्याधिक्यं स्फुटं प्रतीयते। रागादिशून्यस्य समस्यापि भगवतोऽव्यभिचरितभक्तिमत्सु अनुकम्पारूपपक्षपातो दृश्यते, अत एवेश्वरस्यापि भक्तसारथ्यादौ प्रवृत्तिः। श्रवणभक्तिः कमपि तथा भगवति चमत्कारं जनयति, येन श्रवणेच्छामात्रेण भगवान् तद्हृदयेऽवश इवावरुध्यते[२०]। भक्तिमुग्धो भगवान् न तद्हृदयं मुञ्चति, प्रणयरशनया निबद्धचरणकमलश्च सन्नार्हत्यात्मानं मोचितुम्[२१]। उद्धवं स्ववशीकरणोपायं स्वय भगवान्-भक्त्याहमेकया ग्राह्य इति[२२क]। भक्तेरेवाचिन्त्यप्रभावो यद् दुरधिगमोऽपि भगवान् स्वमातुर्भयाद् भीतवत्पलायते, सा च परमस्वतन्त्रमपि भगवन्तं प्राकृतवद् बध्नाति[२२ख]। यथा सुखापो भगवान् भक्तितां न तथा तापसादीनां ज्ञानिनामपीत्याह शुकाचार्यः[२३]। ध्रुवस्तु आत्मानन्दादपि भगवच्चरणध्यानकथाश्रवणरूपे भजनानन्देऽधिकं सुखं ब्रवीति[२४]। भक्तिमद्भिः सह संलापमात्रेण दौष्कुल्यरूपं नैयून्यमपनीयत इति सूतो वदति[२५]। भक्तिर्न केवलमविद्यां निवर्तयति, तत्कार्यभूतं प्राकृतगुणप्रवाहं वोपरमयति[२६], अपितु ज्ञानस्यावान्तरव्यापारं विनापि निरावरण- मङ्गलमयनामरूपयोः श्रवणकीर्तनस्मरणादिषु अर्चनादिषु तच्चरणारविन्दयोराविष्टचेतसां भक्तिमतान्तु सुतरां मोक्ष इति ब्रह्मा ब्रवीति[२७]। यथा मनःशुद्धये

---

१६. (श्रीमद्भा ९-४-६५)

१७. (श्रीमद्भा १-७-१०)

१८. तथा परमहसानां मुनीनाममलात्मनाम्।
भक्तियोगविधानाथं कथं पश्येम हि स्त्रियः।। (श्रीमद्भा १-९-२०)

१९. तस्यारविन्दनयनस्य पदारविन्दकिञ्जिल्कमिश्रतुलसीमकरन्दवायुः।
अन्तर्गतः स्वविवरेण चकार तेषां सङ्क्षोभमक्षरजुषामपि चित्ततन्वोः।। (श्रीमद्भा ३-१५-४३)

२०. सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रुषुभिस्तत्क्षणात्। (श्रीमद्भा १-१-२)

२१. भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसाम्। (श्रीमद्भा ३-९-५)

२२. (क) (श्रीमद्भा ११-१४-२१)

२२. (ख) (श्रीमद्भा १०-९-१४)

२३. नायं सुखापो भगवान् देहिनां गोपिकासुतः।
ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह।। (श्रीमद्भा १०-९-२१)

२४. (श्रीमद्भा ४-९-१०)

२५. (श्रीमद्भा १-१८-१८),

२६. तमेव परमात्मानं जारबुद्ध्यापि सङ्गता।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः।।
गुणप्रवाहोपरमस्तासां गुणधियां कथम्।। (श्रीमद्भा १०-२९-११, १२/१-८-३६):

२७. श्रीमद्भा १०-२-३७,

साधनभक्तेरन्तरङ्गसाधनता तथैव सतां भक्तानां सङ्गस्य भक्त्यङ्गता। सत्सङ्गेन ऐश्वर्यपरिज्ञानं ततः श्रद्धा ततो रतिस्तदनु भक्तिरिति क्रमेण संभवतीति भगवता कपिलेन न्यगादि[२८]। इह संसरतां जनानां सत्स्वपि बहुषु मोक्षमार्गेषु ब्रह्मा भक्तियोगमेव सर्वथोपयुक्तं मन्यते। स हि समाहितमनाः साकल्येन वेदं त्रिर्विचार्यैवं निरचैषीत्[२९]। इममेवार्थमनुमोदमानो भगवान् कपिलोऽपि भक्त्यर्थमेव स्वजननीं देवहूतिमुपदिदेश[३०]। कर्मादिपराणान्तु तत्तल्लोकादिपरिमितमनित्यं च सुखम्, विषयतः फलतश्च श्रेष्ठत्वाद् भक्तिमतस्तु तत्परिपूर्णम्। आस्तां तावदुत्तमभक्तकथा, प्राकृतभक्तोऽपि तावत्कृतार्थ एवेत्याह भगवान् स्वयम्-

**बाध्यमानोऽपि मद्‌भक्तो विषयैरजितेन्द्रियः।**
**प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते[३१]।**

अहो यथाकथञ्चिद्रागादिना जाताया भक्तेरपि महन्माहात्म्यम्। पाकाद्यर्थं प्रज्वालितो वह्निर्यथा काष्ठं भस्मसात्करोति तथैव तद्विषयानुरक्तिः समस्तपापानि[३२]। श्रीकृष्णपदारविन्दयोर्याविच्छिन्न-स्मृतिसन्तानरूपा भक्तिः सा न केवल-मभद्रममुच्छिद्य सत्त्वं शोधयति अपितु विज्ञानवैराग्युक्तं ज्ञानं साध्यभक्तिं च जनयति[३३]। अत उक्तं यद्यपीयं दुरापा, लब्धान्तःस्थं मलं कषायं च नाशयति[३४]। वह्निना तापितमेव सुवर्णं यथा मलं जहाति, स्वरूपं भजते, न तक्षणघर्षणादिना, तथैव साधको भक्त्यैव कर्मवासनां विहाय स्वशेषतैकरतिरूपतामापद्यते, यथा वा भुक्तं प्रयत्नं विनैव जाठराग्निः जरयति, तथैव भक्तिरियं लिङ्गशरीरं क्षपयति। रोमहर्षादिनाभिव्यज्यमानेयं भक्तिर्न स्वाश्रयमेव शोध यति, भक्तिप्रभावादेव भक्तः सर्वं लोकमपि पुनाति[३५]।

---

२८. न युज्यमानया भक्तया भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये। ३-२५-१९
सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः।
तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति। (३-२५-२५)

२९. न ह्यतोऽस्ति शिवः पन्था विशतः संसृताविह।
वासुदेवे भगवति भक्तियोगो यतो भवेत्।।
भगवान् ब्रह्म कात्स्न्र्येन त्रिरन्वीक्ष्य मनीषया।
तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्।। (श्रीमद्‌भा २-२-३३/३४)

३०. (श्रीमद्‌भा ३-३२-२२/२३)

३१. (श्रीमद्‌भा ११-१४-१८)

३२. (श्रीमद्‌भा ११-१४-१९)

३३. अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शतं तनोति।
सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम्।। (१२-१२-५४)

३४. श्रीमद्‌भा ४-२२-२०

३५. श्रीमद्‌भा ११-१४-२५/३-२५-३३
वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च।
विलज्ज उद्‌गायति नृत्यते च मद्‌भक्तियुक्तो भुवनं पुनाति।। (११-१४-२४)

भगवतो दृढमेवं समाश्वासनं भक्तौ प्रवर्तयतीव विजयते- भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये[३६]। किरातहूणान्ध्रपुलिन्दपुल्कससदृशानपि जीवान् पावयितुं बद्धपरिकरेयं भक्तिः[३७]। सश्रद्धं सेविता ज्ञानं वैराग्यं च जनयति, संसारनिवृत्तिरूपं फलं फलति,। यथा भुञ्जानस्य प्रतिग्रासं तुष्टिः पुष्टिः क्षुन्निवृत्तिश्च जायते, तथैव भगवत्पादकमलं भजमानस्य भक्तिर्विरक्तिर्भगवत्प्रबोधश्च युगपज्जायते। एतेन समकालोत्पत्तिवर्णनादन्योन्यकारणता निरस्यते[३८]। भागवते निर्गुणभक्तिनाम्ना गीयमाना साध्यभक्तिर्वैष्णवाचार्याणामप्यनुकूला-[३९]

**मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।**
**मनोगतिरविच्छिन्ना तथा गङ्गाम्भसोऽम्बुधौ[४०]॥**

इयमेव च तैलधारावदविच्छिन्नभगवत्स्मृतिसन्तानरूपता भक्तेः, अत एव यस्य भक्त्यपेक्षया सर्वं तृणाय मन्यमानस्य स्मृतिः निमिषार्धमपि भगवत्पदारविन्दान्न चलति, स वैष्णववरिष्ठतया प्रशस्यते[४१], एतेनानन्यदेवताकत्वम्अनन्यफलकत्वं च सूचितं भवति। एवंविधो भक्तो दुस्तरामपि मायामञ्जसैव तरति[४२]। सर्वात्मना मुकुन्दं प्रपद्यमानो देवस्य ऋषेः पितॄणां वा ऋणी किङ्करो वा न भवति। कदाचित्तत्कृतविहितकर्मनिवृत्तिजन्यं विकर्मोत्पद्यते, तद्धुनोति स्वयं हरिरेव प्रियत्वात्स्वाज्ञाभङ्गं सोढ्वापि[४३]।

भागवते भक्तवरिष्ठश्रीप्रह्लादमुखेन श्रवणकीर्तनस्मरण-पादसेवनार्चन- वन्दन-दास्य सख्यात्मनिवेदनरूपा नवलक्षणा[४४] प्रणिपात-स्तुति-समर्पण-परिचर्या- स्मृतिकथाश्रवणरूपा षडङ्गा च भक्तिः[४५] प्रकाशमायाता। साधनभक्त्यनुष्ठानेन प्रेमलक्षणा साध्यभक्तिर्जायते इति ''भक्त्या सञ्जातया भक्त्या''[४६] इति कथनेन स्वयं भगवतैव प्रकाशितम्। इमामेव च सात्वस्मिन् परमप्रेमरूपेति[४७] सूत्रेण

---

३६. (श्रीमद्भा ३-२५-४०)

३७. (श्रीमद्भा १-२-७)

३८. भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः।
प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टि क्षुदपायोऽनुघासम्॥ (श्रीमद्भा ११-२-४२)

३९. श्रीभाष्यम्- ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम् (जिज्ञासाधिकरणम् पृष्ठम्- ३२)

४०. (श्रीमद्भा ३-२९-११)

४१. (श्रीमद्भा ११-२-५३)

४२. (श्रीमद्भा ११-३-३३)

४३. देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन्।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम्॥
स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः।
विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्टः॥ (श्रीमद्भा ११-५-४१/४२)

४४. (श्रीमद्भा ७-५-२३)

४५. (श्रीमद्भा ७-९-५०)

४६. (श्रीमद्भा ११-३-३१)

४७. नारदभक्तिसूत्रम् १-२

संसूच्य यथा गोपिकानामिति निदर्शितं श्रीनारदेन।

तादृशभक्तेराचार्यभूतानां व्रजसीमन्तिनीनामनिर्वचनीया प्रेमलक्षणा भक्तिः कथमिव प्रकाश्येत, यदर्थं स्वयं भगवानेवमाह-

**ताः मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः।**
**मामेव दयितं प्रेष्ठमात्मानं मनसा गताः॥**

**ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम्।**
**मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः।**
**स्मरन्त्योऽङ्ग विमुह्यन्ति विरहोत्कण्ठ्यविह्वलाः[४८]॥**

अनुक्षणं कथमिव भक्त्या समयाकुर्वन्ति गोप्य इति निपुणं वर्ण्यते भागवते-

**या दोहनेऽवहनने मथनोपलेपप्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ।**
**गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो धन्या व्रजस्त्रिय उरूक्रमचित्तयानाः[४९]॥**

भक्तिः खल्वमृतविद्या, सा च मुख्यतो महत्कृपया लभ्यते, अत आचार्याद्धैव विदिता विद्या साधिष्ठं प्रापयति- आचार्यवान् पुरुषो वेद इति श्रुत्या विधिसम्पत्त्यै सन्देशप्रेषणव्याजेन याभ्यः प्रेमभक्त्यवाप्तये स्वमित्रमुद्धवं प्राहिणोद् भगवानपि। तत्र यदीयं भगवदनुरागातिरेकं विलोक्य चकितचकित इवाभूदुद्धवोऽपि। सहसैव तादृशानुरागप्रकर्षं वीक्ष्यं स्वज्ञानगर्वमपास्य तत्पादपङ्कजरजांसि प्रार्थयते स्मातिकातरः। गोपीनां चरणरेणुजुषां गुल्मादीनां मध्ये यत्किमप्यहं स्यामिति चाचीकमत[४९]। रासप्रकरणेऽतिप्रेमधर्षितानां विरहविह्वलानां तासां तत्सुखसुखित्वरूपोऽनुरागः कियानिति तद्गीतपद्येन शक्यते मनाग् बोद्धुम्-

**यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु।**
**तेनाटवीमटसि तद् व्यथते न किंस्वित्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः[५०]॥**

माथुरयाज्ञिका भक्तिमतीस्ता भार्या गुरूनिव मानयन्तो भगवद्भक्तिरहितमात्मानं गर्हयाञ्चक्रुः-

**धिग् जन्म नस्त्रिवृद्विद्यां धिग् व्रतं धिग् बहुज्ञताम्।**
**धिक् कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे[५१]॥**

---

४८. (क) (श्रीमद्भा १०-४६-४/५)
४८. (क) (श्रीमद्भा १०-४४-१५)
४९. आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्॥ (श्रीमद्भा १०-४७-६१)
५०. (श्रीमद्भा १०-३१-१९)
५१. (श्रीमद्भा १०-२३-२९)

भगवान् नारदस्तु पाञ्चरात्रोक्तभक्तिमुपदिशन्नाह-यतो जन्मकर्मादेर्हरिभक्तिरेव फलमतस्तद्विहीनं सर्वं व्यर्थम्। विशुद्धमातापितृभ्यामुत्पत्तिरुपनयनं दीक्षा वाग्विलासोऽवधारणसामर्थ्यम् इन्द्रियपाटवं देहादिव्यतिरिक्तात्मज्ञानं वेदाध्ययनं व्रतवैराग्यादिकं वा स्यात्, भक्तिं विना सर्वं व्यर्थमेव[५२]। स एव भगवान् बादरायणं स्मारयन्निवाह- भक्तिवर्जितं नैष्कर्म्यं निरञ्जनं ज्ञानमपि न शोभते किम्पुनः भगवति अनर्पितं कर्म, तत्तु साधनकाले फलकाले च दःखरूपमेव भवति[५३]। न तावत्काम्यकर्मादेरनुष्ठानमेव, अपितु नित्यनैमित्तिक- स्वधर्मानुष्ठानमपि अनादृत्य केवलं हरिभक्तिरेव विधेया। यदि स्वधर्मपरित्यागेन भजन् भक्तिपरिपाकेन कृतार्थो तदा न कापि चिन्ता, यदि पुनः अपक्व एव म्रियते तदापि भक्तिरसिकस्य भक्तिवासनासद्भावान्न क्वचिदनर्थशङ्का। भक्तिं विना स्वधर्मानुष्ठानेन को वार्थ समवाप्यते[५४]? नेदं विस्मर्तव्यं यन्मुकुन्दे भक्तिमान् कदाचिदपि केवलकर्मनिष्ठवत् संसृतिं न गच्छति, स तु रसनीये भगवति आग्रहवान् भवति यतो भगवत्पदारविन्दस्यालिङ्गनं स्मरन् विहातुं नेच्छति[५५]। वस्तुतो भक्तिरेव श्रेयःस्रवणी, ततो हि अभ्युदयापवर्गलक्षणानि श्रेयांसि सुतरां निर्झरन्ति, अतो भक्तिमनादृत्य आत्मतत्त्वविज्ञानाय विधीयमानः प्रयासो धान्यावाप्तये स्थूलतुषावघात इव केवलं परिश्रान्तिमेव जनयति, न तु तत्फलम्[५६]। अतो हेतो भक्तिरसिका भगवता दीयमानं मोक्षमपि उपेक्ष्य पादसेवामेव कामयन्ते[५७]। अतो भगवद्विषये भागवत उक्तम्- मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगमिति[५८]। एतेनैव भक्तेर्दौर्लभ्यमनुमातुं शक्यम्। ये विवेकिनोऽपि विमुक्ता वयमिति विमुक्तमानिनो भक्त्यभावाद् भगवत्पादारविन्दमुपेक्षन्ते, ते कष्टसाध्यं मोक्षसन्निहितं पदमवाप्यापि ततो नूनं पतन्ति. किन्तु ये भगवद्भक्तिमन्तस्ते न कदाचिदपि पतन्ति प्रत्युत निर्भया विचरन्तो विघ्नान् जयन्ति, भक्तिप्रभावात्ते मृत्युमप्यभिभवन्ति[५९]। भगवत्प्रसादफलभूतं पार्षदसमानीतं वैकुण्ठविमानमारुरुक्षो ध्रुवस्य समक्षमागतस्य मृत्योः शिरसि पदं निधाय विमानारोहो भागवते वर्णितः[६०]। लोकेऽपि भगवत्परायणान् भक्तान् भगवत्पार्षदाः सर्वतो रक्षन्ति[६१]। भगवान् यमोऽपि भक्तानदण्डयान् मत्वा तत्सकाशगमनात्

५२. (श्रीमद्भा ४-३१-१०/११/१२/१३)

५३. नैषकर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्।। (श्रीमद्भा १-५-१२)

५४. त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि।
यत्र क्व वाऽभद्रमभूदमुष्य किं को वार्थ आप्तो भजतां स्वधर्मतः।। (१-५-१२)

५५. (श्रीमद्भा १-५-१९)

५६. श्रेयःस्रुति भक्तिकुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्।। (श्रीमद्भा १०-१४-४)

५७. (श्रीमद्भा ३-२९-१३)
मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम्।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम्।। (श्रीमद्भा. ९-४-६७)

५८. (श्रीमद्भा ५-६-१८)

५९. येऽन्येऽरविन्दाक्ष विमुक्तमानिनः त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः।।
तथा न ते माधव तावकाः क्वचिद् भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः।। (श्रीमद्भा १०-२-३२-३३)

६०. मृत्योर्मूर्ध्नि पदं कृत्वा आरुरोहाद्भुतं गृहम्। ४-१२-३०

६१. रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च।। (श्रीमद्भा ६-३-१८)

स्वभृत्यान् वारयन्निरूपितः[६२]। कामं ते पापं कुर्वन्त एव स्युः। भागवतसरण्या तु महापापानामपि नरकपरिहारोपायभूतं प्रायश्चित्तमपि नामग्रहणादिरूपा भक्तिरेव, अन्यस्यातिदुष्करत्वेऽपि एवंविधप्रायश्चित्ते भक्तिप्रधाना विरला एव प्रवर्त्तन्ते। नात्र ज्ञानमार्ग इवासहायतानिमित्तं भयं नापि कर्ममार्गवन्मात्सर्यादियुक्तेभ्यो भयम्। अतोऽन्यनिरपेक्षा भक्तिस्तु स्वल्पापि सर्वथा पुनाति। कृच्छ्रादीनि तु भक्तिं विना न शोधयन्ति यथा भागीरथी अपि सुराकुम्भम्-

**न तथा ह्यघवान् राजन् पूयेत तप आदिभिः।**
**यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया॥**

**केचित्केवला भक्त्या वासुदेवपरायणाः।**
**अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः॥**

**प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम्।**
**न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः[६३]॥**

इदमेव रहस्यमजामिलोपाख्यानेन प्रमाणीकियते। नामोच्चारणभक्तिर्न केवलं कर्मसाद्गुण्यकारिणी किन्तु स्वातन्त्र्येणाघनिवर्तिकापि, कर्माङ्गत्वेऽपि हरिनाम्नः खादिरत्वादिवत्संयोगपृथक्त्वेन सर्वप्रायश्चित्तार्थत्वं युक्तमेवेत्याह तत्रैव श्रीधरस्वामी[६४]। साधारणमनुष्याणां का कथा, ऋषयोऽपि भगवत्प्रसङ्गविमुखा इह संसरन्ति[६५]। भगवन्मुखाह्लादकः प्रह्लादतु शमदमशौचवैराग्यसंत्यज्ञानादिद्वादशगुणयुक्ताद् भगवत्पादारविन्दविमुखात् विप्रात् भक्तिमन्तं श्वपचं वरीयांसं मन्यते। स हि भक्त्या सर्वं कुलं पुनाति किन्त्वभक्तो विप्रो भूरिगर्वेण स्वात्मानमपि न पुनाति[६६]। भक्तिहीनस्य सर्वे गुणा गर्वाय, न तु शुद्धये। वस्तुतो भक्तिरेव गुणाधायिका-

**यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वे गुणास्तत्र समासतेऽसुराः।**
**हरावभक्तस्य कुतो महद्गुणाः---------- इत्याद्युक्तेः[६७]॥**

अनन्यभक्तेः स्वरूपं विवेचयन्नारदो बभाण प्रचेतोभ्यः- अच्युतभक्त्यैव सर्वदेवताप्रीतिर्जायते, यथा तरुमूलसेकेन स्कन्धशाखापत्रपुष्पादितृप्तिः, यथा भोजनेन सकलेन्द्रियपुष्टिर्वा[६८]। मार्चचनं नार्हति

---

६२. ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात्पादकं तदपि हन्तयुरुगायवादः॥
तान्नोपसीदत हरेर्गदयाभिगुप्तान् नैषां वयं न च वयः प्रभवाम दण्डे॥ (श्रीमद्भा ६-३-२६/२७)

६३. (श्रीमद्भा ६-१-१५/१६/१८)

६४. अत्रैव श्रीमद्भागवतभावार्थदीपिकायां श्रीधरस्वामी।

६५. (श्रीमद्भा ३-९-१०)

६६. (श्रीमद्भा ७-९-१०)

६७. भागवतपरम्परायां प्रसिद्ध पद्यम्।

६८. यथा तरोर्मूलनिषचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या॥ (श्रीमद्भा ४-३१-१४)

गन्तुमन्यथेति वचनेन[६९] भागवतेन भक्तेरमोघफलत्वं सिद्ध्यति, अतोऽसुरबालकान् उपायसहस्रेष्वपि भक्तियोगमेव श्रेष्ठं मत्वोपदिशति प्रह्लादः-

**तत्रोपायसहस्राणामयं भगवतोदितः।**
**यदीश्वरे भगवति यथा यैरञ्जसा रतिः[७०]॥**

भक्तो मुक्तानामपीदृशमौत्सुक्यं विचिन्त्यैव भगवान् बादरायणिस्तामेवं स्तौति-

**को नु राजन् इन्द्रियवान् मुकुन्दचरणाम्बुजम्।**
**न भजेत्सर्वतो मृत्युरुपास्यममरोत्तमैः[७१]॥**

पूर्वोक्तविवरणानुसारं श्रीमद्भागवतं भक्तिपरमेवेति शक्यते वक्तुम्। किं बहुना, तस्माद् भारत सर्वात्मा भगवानीश्वरो हरिः,[७२] श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम्, तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेदि[७३] त्याद्यावृत्त्या तस्या एव प्रतिपादनं तत्परत्वे प्रमाणमिति। श्रीप्रह्लादस्तु स्वस्तिमत्त्वाय भक्तेरेव सर्वसमाश्रयणीयता, तद्व्यतिरिक्तस्य नटनमात्रत्वमेव निरूपयन् तत्सारल्यं प्रतिपादयति[७४]। यद्यप्युपायोपेयभेदेन प्रतिपाद्यस्य द्वैविध्यम्, ब्रह्मविदाप्नोति परमित्यादिश्रुया भगवत उपेयत्वं, ददामि बुद्धियोगं तं येन मामुपयान्ति त इत्यादिनोपायत्वञ्चोच्यते। भगवतस्तु सिद्धोपायत्वं भक्तेश्च साध्योपायतेति उपदेश दृष्ट्या साध्योपायभूताया भक्तेरेव प्रधानप्रतिपाद्यतेति। अतश्च भगवन्तं नित्य प्राप्यापिअभिन्नस्वरूपा भगवती श्रीरपि भक्तिप्रकर्षादेव तुलसीसौभाग्यं प्रार्थयते[७५]। तादृशीं भक्तिं भगवन्तं श्रीजानकीजानिं किञ्चित्परिवर्तितेन भागवतीयेन पद्येन याचमानो निबन्धमवसाययामि-

**अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतरा क्षुधार्त्ताः।**
**प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षतां त्वाम्[७६]॥**

---

६९. (श्रीमद्भा ८-१७-१७)
७०. (श्रीमद्भा ७-७-२९)
७१. (श्रीमद्भा ११-२-२)
७२. (श्रीमद्भा २-१-५)
७३. (श्रीमद्भा ७-१-३९)
७४. देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च।
भजन् मुकुन्दचरणं स्वस्तिमान् स्याद् यथावयम्॥
न दानं न तपो नेज्या न शोचं न व्रतानि च।
प्रीयतेऽमलया भक्त्या हरिरन्यद् विडम्बनम्॥ (श्रीमद्भा ७-७-५०/५२)
७५. श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वापि वक्षसि पदं किल भृत्यजुष्टम् (भा.१०-२९-३७)
७६. (श्रीमद्भा ६-११-२६)

# पाणिनीयतन्त्रे विमृष्टे व्याकरणपदार्थे शास्त्रीयो दृष्टिनिक्षेपः

डॉ० रामनारायणद्विवेदी

सर्वविधश्रेयःशासनेव शास्त्रस्य शस्त्रत्वमिति मानवानां हिताय सर्वस्वभूतं शास्त्रम्। शास्त्रञ्च नैकविधं तेषां ज्ञानाय पदपदार्थज्ञानमावश्यकम्। तस्य ज्ञानं व्याकरणाधीनमिदमेवमुक्तं वाक्यपदीये–

**यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः।**
**तथैव लोके विद्यानामेषा, विद्यापरायणम्।।**[१]
**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते।।**[२]

वेदोऽपि शब्दव्याख्यानरूपेण व्याकरणेन ज्ञायत इति छान्दोग्योपनिषद्युक्तम्। 'वेदानां वेद'[३] इत्यादिना।

व्याक्रियन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्तेऽनेनेति व्याकरणव्युत्पत्तौ वि आङ् पूर्वक कृ धातोः करणेऽर्थे ल्युटि सति व्याकरणशब्दः साधुः।

असाधुशब्दावधिकसाधुशब्दर्मकपृथक्कृतिप्रयोजको नियमविशेषो व्याकरणम्। महाभाष्ये प्रदीपटीकायामयमर्थः[४] स्पष्टः। व्याकरणस्य चेदमन्वर्थं नाम-शब्दानुशासनमिति।[५] तत्रैव उद्योते[६]ऽनुशिष्यन्ते, असाधुशब्देभ्यो विविच्य ज्ञाप्यन्तेऽनेनेतिकरणल्युडन्तया शास्त्रपदेन सामानाधिकरणमिति भावः।

अनया व्याकरणव्युत्पत्त्या व्याकरणस्य शब्दान्वाख्यायकत्वं सिद्धम्। तच्च व्याकरणं किमिति जिज्ञासायां भाष्यकारेणोक्तम्[७], व्याकरणमित्यस्य कः पदार्थः। तत्र भाष्ये सूत्रं (पाणिनेरष्टाध्यायीसूत्रम्) व्याकरणमित्युक्तम्।

---

१. वाक्यपदीयम्, ब्रह्मकाण्डम् कारिकासंख्या १५
२. वाक्यपदीयम्, ब्रह्मकाण्डम् कारिकासंख्या १३
३. छान्दोग्योपनिषद्
४. प्रदीपः महाभाष्यस्य टीका, तत्कर्ता कैयटः।
५. महाभाष्ये पस्पशाह्निकस्य प्रारम्भे प्रदीपटीकायां 'शब्दानुशासनं नाम शास्त्रमधिकृतमिति व्याख्यानावसरे।
६. उद्योतः भट्टनागेशस्य महाभाष्यमुपरि टीकास्ति
७. महाभाष्ये पस्पशाह्निके व्याकरणपदार्थनिरूपणाधिकरणे

सूत्रलक्षणम् - तत्र सूत्रन्नाम

**अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम्।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥**

असारमप्यल्पाक्षरं भवितुमर्हतीति तद् व्यावृत्तये आह सारवदिति। अनेकरूपेण व्याख्येयत्वमाह विश्वतोमुखमिति, यथा- [8]शाङ्करमते तत्त्वमस्यादि वाक्यानामद्वैतपरत्वव्याख्यानम्। द्वैतिनाम्मते द्वैतपरत्वमेव। यथा- [9]वृद्धिरादैजित्यस्य शक्तिज्ञापकत्वम् तज्ज्ञापनेन वृद्धिलाभश्च। [10]हाऊ, हाऊ इति रूपेण मध्ये-मध्ये सामवेदे उच्चार्यते वैदिकैः, स एव स्तोभ उच्यते, सूत्रे तद्राहित्य बोधनायास्तोभमिति। अन्वद्यमित्यनेन सर्वविधदोषरहित्वमुच्यते। एतच्च ब्राह्मणवशिष्ठन्यायेनोक्तम्। एवमसंदिग्धमित्यपीदञ्च सूत्रं षड्विधम् संज्ञापरिभाषाविधिनियमातिदेशाधिकारभेदेभ्यः। तथा चोक्तम्-

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥**

अत्र लक्ष्यते ज्ञायते यत्तल्लक्षणमिति व्युत्पत्त्या लक्षणशब्दः स्वरूपपरः न तु असाधारणधर्मपरः।

तत्र संज्ञाशास्त्रत्वम्-शक्तिज्ञापकत्वम्। सर्वे सर्वार्थवाचकाः इति शिष्टोक्त्या वृद्ध्यादिशब्दानां सर्वार्थवाचकत्वेऽत्यस्तादादीनां तदज्ञानात् वृद्धिरादैजित्यादीनां तदर्थज्ञापकत्वमस्त्येव।

[11]परिभाषात्वन्तु सङ्केतग्राहकभिन्नत्वे शब्दधर्मिकसाधुत्वप्रकारक शास्त्रजन्या प्रामाण्यज्ञानानास्कन्दित-बोधे सहकारित्वेन मुनयभिप्रेतत्वम् यथा-'तस्मिन्निनितिनिर्दिष्टे पूर्वस्येत्यादि।'[12]

अतिदेशे नाम-वतिघटित्वम् यथा-[13] अन्तादिवच्चेत्यादि। क्वचिच्चात्यन्तत्वाभावेऽपि अब्रह्मदत्तं ब्रह्मदत्तमाहेति ब्रह्मदत्त सदृश उच्यते।

विनापि वतिं वत्यार्थोपलभ्यत इति भाष्यादर्थतो वतिप्रत्ययसम्बन्धमादाय, पूर्वत्रासिद्धमित्यादौ समन्वयः। उत्तरोत्तरं सम्बन्धः अधिकारः यथा अङ्गस्येत्यादीनाम्-परिष्कृतस्तु-'स्वदेशेलक्ष्यसंस्कारोपयोगि-विधिशास्त्रीय वाक्यार्थबोधोपकारकवाक्यार्थाननुभावकत्वे सति विधिशास्त्रीय लक्ष्यसंस्कारोपयोगिवाक्यार्थबोध-प्रयोजकत्वम्' संज्ञादिवारणाय सत्यन्तं शेषः इत्यत्रेतिव्याप्तिवारणाय वाक्यर्थविधिशास्त्रीय-वाक्यार्थबोधोपकारेति

---

८. ब्रह्मसूत्रे
९. वृद्धिरादैच्, अष्टा. १.१.१
१०. सामवेदे
११. परिभाषेन्दुशेखरे भूतिटीकायाः व्याख्येयपरिभाषाप्रतिज्ञायाम्
१२. तस्मिन्निनितिनिर्दिष्टे पूर्वस्य, अष्टा. १.१.६६
१३. अन्तादिवच्च, अष्टा. ६.१.७५

विशेषणम्। विधित्वन्नाम पुण्यजनकतावच्छेदकसाधुत्वज्ञानजनकत्वम्। विधिशास्त्रं यथा [१४]'इकोयणची' त्यादिसूत्रम्। एतादृशं भेदलक्षणं हि सूत्रं व्याकरणमिति चेदभिप्रायः तदा व्याकरणस्य सूत्रमिति षष्ठ्यर्थो नोपपद्यते। न हि सूत्रादन्यत् किञ्चिदुपलभामहे, येनावयवावयाविभावादयः सम्बन्धाः स्युः। सूत्रमात्रस्य व्याकरणत्वमिति च वक्तुमनुचितं तावन्मात्रेण शब्दानां ज्ञातुमशक्यत्वात् न हि केवलेन सूत्रेण शब्दज्ञानम्। किन्त्वुदाहरणप्रत्युदाहरण-वाक्याध्याहारादि समुदितेन।[१५]

लक्ष्यन्तावदस्त्वित्यययमपि पक्षो न समीचीनतामर्हति ल्युडर्थासङ्गतेः। शब्दकरणकशब्द-व्याकरणासंभवनेन लक्ष्यमात्रे तादृशकरणत्वानुपपत्तेः।

इत्येवमाशङ्क्य सूत्रमात्रस्यापि भाष्ये व्याकरणत्वं कथञ्चित्समर्थितं तथाहि व्याकरणस्य सूत्रमित्यत्र षष्ठी तु राहोः शिरः इत्यादिवदौपचारिकी। यथा हि तत्रानेकावस्थायुक्तं शिरः राहुशब्दार्थः यत्किञ्चिदेकावस्थायुक्तम्, तत् शिरः शब्दार्थः एतादृशरहुशब्दार्थस्य तादृशः शिरः शब्दार्थोऽवयवः। तथा च षष्ठ्यर्थोपपत्तिः। एवमिहापिव्याकरणशब्देन शास्त्रस्य व्याकृति क्रियायां करणत्वमुच्यते, सूत्रशब्देन तु समुशब्देन तु समुदायरूपतेति व्यवहारः। शब्दप्रतिपत्तिरूपो दोषोऽपि नास्ति। पदच्छेदादिभिः सूत्रार्थस्यैवाभिव्यञ्जनात्। एतन्मूलकमेवोच्यते-[१६]सूत्रेष्वेव हि तत्सर्वं यद्वृतौ यच्चवार्तिके। आतश्च सूत्राद्भवति, योह्युत्सूत्रं कथयेन्नादो गृह्यतेतिभावः। नाद इत्यस्य नैतदित्यर्थ, अथवा नादोऽर्थरहितत्वाद् घोषमात्रमेव गृह्यत इति भावः। तथा चानया रीत्या भाष्ये यद्यपि सूत्रमात्रस्य व्याकरणत्वमभ्युपेत्य स्वीकृतम्, तथापि वस्तुतः [१७]'लक्ष्यलक्षणे समुदिते व्याकरणमित्ययमेव पक्षोज्यायान्'। अमुमेवार्थमाहुः श्री पं. सभापतिशर्मोपाध्यायाः [१८]शब्दसाधुत्वबोधकः सूत्रात्मकः लक्ष्यलक्षणात्मको वा ग्रन्थविशेषः व्याकरणमिति तत्र वाकारोऽनास्थायामित्यवधेयम्। तृतीयपक्षस्य समुदितस्य व्याकरणत्वपोषकत्वस्य सिद्धान्तरूपता च। टीकायामपि-ननु समुदितस्य व्याकरणत्वे सूत्रमात्राध्ययने कथ्यते व्याकरणमधीयते तन्नोपपद्यते, इति चेत् तत्र घृतं भूक्तम्, तैलं भुक्तम्, उत्तरे पाञ्चलाः पूर्वे पाञ्चालाः, पूर्वे पाञ्चाला इत्यादि व्यवहारः यथा तेषां शब्दानां समुदायपरत्वेऽप्यवयवत्वपरत्वमादाय निर्वाहः तथा प्रकृतेऽपि निर्वोढव्यम्। अत एव सूत्रार्थोपबृंहणपराणां भाष्यादिग्रन्थानां तद्व्याख्यानभूताधुनिग्रन्थानां लक्ष्यलक्षणादिरूपाणां व्याकरणत्वम्। सूत्रमात्रस्य व्याकरणत्वे लक्षणावृत्तिराश्रयणीया भवेत्। वार्तिकानामपि तत्त्वमक्षतमेव। व्याकरणन्यूनतापूरकत्वादेव। तथा च वार्तिकलक्षणम्-

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**
**तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः॥**[१९]

१४. इको यणचि, अष्टा. ६.१.७७

१५. उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति। महाभाष्ये पस्पशाह्निके 'शब्दप्रतिपत्तिः' इति वार्तिके

१६. योगवशिष्ठे संदर्भरूपेण मिलति

१७. महाभाष्ये पस्पशाह्निके सिद्धान्तवार्तिकम् "६"

१८. प्रौढ़मनोरमायाम्

१९. पराशरोपपुराणम्, सप्ताध्याये विष्णुधर्मोत्तरे तृतीयखण्डे चतुर्थाध्यायेऽपि मिलति

तदेवं लक्ष्यलक्षणसमुदितव्याकरणेन शब्दा अन्वाख्यायन्त इति सिद्धम्।

**पाणिनीयव्याकरणस्य प्राशस्त्यम्**

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति'[२०] आगमनेन साङ्गस्य वेदस्याध्ययनमनादिकालेनापरिच्छेदेन बोध्यते। अङ्गानि च छन्दः, कल्पो, निरुक्तः, ज्योतिः, शिक्षाव्य करणानि षड्। मुखमिव प्रधानत्वात् व्याकरणं मुखस्थानीयं प्रधानमङ्गम्। यथा वेदोऽनादिः तथैव व्याकरणप्यनादि।

**[२१]असौ पुनर्व्याकरणं ग्रहीष्यन् सूर्योन्मुखः प्रष्टुमनाः कवीन्द्रः।**
**उद्यद्गिरेरस्तगिरिं जगाम ग्रन्थं महद्धारयन्नप्रमेयः॥**

ससूत्रवृत्त्यर्थपदं महार्थं ससंग्रहं सिद्धयति वै कवीन्द्रः इति वाल्मीकिवचनेनापि एतत्सुस्पष्टी भवति यद् व्याकरणं न केवलं पाणिनिनैव प्रौक्तमपितु ततः पर्वमपि वेदवदानाद्येव। इदन्त्वन्यत् यत् पूर्वतनानि व्याकरणानि वृत्तिसंग्रहादिपदेन व्यवह्रियन्ते स्म। धाता यथा पूर्वमकल्पयम् इति श्रुत्यनुसारेण वैयाकरणः पाणिन्यदयः सूत्राणि संग्रहादीनि च पूर्वं व्याकरणानुबन्धीन्येव प्रकाशितवन्तः। अतः पूर्वं व्याकरणमपि नासीदिति स्वकपोलकल्पितान्येव पाणिन्यादिभिः कथ्यते इयमप्याशङ्का नावतरति। तच्च व्याकरणन्नैकविधिमासीत् तथा चोक्तम्–

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्॥**

इति शिष्टोक्त्या नवविधम्। स्फोटायनं पौष्करसादि, दौर्गम कातन्त्रमित्यादीन्यापि अनेकानि व्यकरणानि। जैनव्याकरणानि च विचित्राण्युपलभ्यन्ते। सत्स्वेवान्येषु व्याकरणेषु अद्यत्वे पाणिनीयमेवाद्रियते। तदेव च वेदाङ्गतया मन्यते। अन्यत्र वैदिकानां लौकिकानाञ्च सर्वेषां व्युत्पादनाभावादस्यैव वेदमूलकत्वाच्च। अ इ उ ण् इति सूत्रमुपक्रम्य ऋक्तन्त्रव्याकरणे उक्तञ्च [२२]इदमक्षरच्छन्दो वर्णशः संमनुक्रान्तं ब्रह्मा बृहस्प्रतये प्रोवाच बृहस्पतिरिन्द्राय इन्द्रो भरद्वाजाय भरद्वाजऋषिभ्यः ऋषयो ब्राह्मणेभ्यस्तं खल्विदमक्षरसमाम्नायमित्याचक्षते न भूक्त्वा न नक्तं ब्रूयात् ब्रह्मराशिरिति वेदानां वेदः इति श्रुतेरस्य वेदमूलकत्वम्। कृते तु मानवाः धर्माः इति व्यवस्थावदिदानीं शब्दपशब्दनिर्णायकत्व[२३] पाणिनीयव्याकरणस्यैव मन्यते। तदुक्तम्–

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।**
**सर्वोपकारकं ग्राह्यम्, कृत्स्नं त्याज्यं न किञ्चन॥**

२०. महाभाष्ये पस्पशाह्निके व्याकरणाध्ययनप्रयोजने
२१. वाल्मीकीयरामायणे ६.३६.४४
२२. लघुशब्देन्दुशेखरे संज्ञाप्रकरणे
२३. पराशरोपपुराणम्

[२४]शताच्च ठन्यतावशते इति सूत्रे कैयटोऽपि-शतप्रतिषेधेऽन्यशतत्वे प्रतिषेध इति भाष्यवार्तिकमुपादायैवं सति शतं परिमाणस्य शताके गो सङ्घ इत्यत्रापि प्रतिषेधो भवति। आपिशलिकाशकृत्स्नयोस्त्वग्रन्थ इति वचनादन्य प्रतिषेधाभावः। नियतकालाश्च स्मृतयः व्यावस्थाहेतवः इति मुनित्रयमतेनाद्यत्वे सधुत्वासाधुत्वविभागः। पस्पशाह्निके भगवता बृहस्पतिश्च प्रवक्तेत्यादिग्रन्थेन व्याकरणनिर्माणप्रकारमेकमुपपाद्य कथं तर्हि इमे शब्दाः प्रतिपत्तव्याः इत्याशङ्क्य किञ्चित् सामान्यविशेषवल्लक्षणं प्रवृत्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान् च प्रतिपद्येरन्नित्युक्तम्। एतेनेदम्प्रतीयते यत् पाणिनेः पूर्वतनानि कर्तव्यमिति बुद्ध्या पठ्यन्ते स्म। बहुकाव्ययसाध्यानि आसन्निति।

तादृशानि च सुकुमारबुद्धीनां दुःखगाहतयेति व्याकरणपरम्पराभ्रंशमाशङ्क्य भगवतापाणिनिना मन्दबुद्ध्यनुग्रहायोत्सर्गात्सर्गापवादरूपं लघुभूतं व्याकरणमाविष्कृतम्। एतदेव वाक्यपदीये-

**प्रायेण संक्षेपरूचीनल्पविद्यापरिगृह्यन्।**
**सम्प्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते।।**
**कृतेऽथ पतञ्जलिना गुरूणा तीर्थदर्शिना।**
**सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने।।**[२५]

अत्र चेत्यमाह पुण्यराजः इह पुरा व्याड्यपरचितं ग्रन्थलक्षपरिमाणं संग्रहाभिधानं निबन्धमासीत् तच्च कालवशात् सुकुमारबुद्धीन् वैयाकरणान् प्राप्यास्तमुपागतं तस्मात् क्लेशभीरूत्वात्संक्षेपरूपचस्ते जाताः।[२६] तैः संग्रहाध्ययने उपेक्षिते सति अस्तं यातः संग्रह इति। द्वितीयकाण्डविषयकविवेचनवेलायामित्थमाह पुण्यराजः।

अवतारेऽपि भाष्यास्य संग्रहेस्तमुपागते। निबन्धहेतोः शास्त्रस्य टीकाकारेण कीर्तितः। संग्रहार्थद्यनुगुणं रूपत्वं चोपपादितमिति। एवञ्च सुकुमारबुद्धीन् अध्येतृन् सम्प्राप्य ते ते व्याकरणागमास्तत्र तत्रासरे शनैः शनैरस्तमुपयात इति। तैस्तैराचार्यैः पुनः पुनः प्रकृतिमवस्था तद्रूपाणि भजन्ते। अतएव इन्द्रचन्द्रादयो व्याकरणकाराः बहवः श्रूयन्ते। समयप्राबल्यात् पूर्वव्याकरणेष्वस्तमुपयातेषु साध्वसाधुत्वविषये विप्लवे सञ्जाते पाणिनीयमेतत्प्रवृत्तमिति समुचितमेव समुपपद्यते। तत्तत्तदुपज्ञापकाचार्यैरेवालौकिकज्ञान-शक्तिमद्भिस्तत्तदर्थबोधनेन व्याकरणस्य शब्दनामर्थावबोधनायोपयान्तरापेक्षणादनवस्थादोषो नास्तीति शम्।

**व्यकरणस्य प्रयोजनम्**

१. परमपरमप्रयोजनम्, मोक्षः, तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्, इति हर्युक्तेः।[२७]

---

२४. शताच्च ठन्यतावसते ५.१.२१ महाभाष्येऽपि व्याख्यानं प्राप्नोति

२५. वाक्यपदीयम्, द्वितीयकाण्डम्, कारिकासंख्या ४७६-७७

२६. वाक्यपदीयम्, द्वितीयकाण्डम्, ४७६ कारिकायाः पुण्यराजविरचितप्रकाशटीकायाम्

२७. तद्वारमपवर्गस्य वाङ्मलानां चिकित्सतम्।
पवित्रं सर्वविद्यानमधिविद्यं प्रकाशते।। वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिकासंख्या १४

२. परमप्रयोजनम्, साधुत्वज्ञानम् साधुत्वज्ञानविषया सैषा व्याकरणस्मृति इति तदुक्तेः।[२८]

३. प्रयोजनानि रक्षोहादीनि, रक्षोहागमलघ्वसन्देहा इति भाष्यात्।

४. अवान्तरप्रयोजनानि तेऽसुरा इत्यादि प्रतीकबोधितानि।

प्रयोजनेषु विशेषाः - प्रयोजने परमत्वमितरेच्छानधीनेच्छाविषयत्वम्। इतरेषु मोक्षेच्छाधीनेच्छा-विषयत्वात्।

द्वितीये परमत्वं स्वप्रयोज्य-प्रयोगप्रयोज्यत्वं स्वं साधुत्वं ज्ञानम्, तत्प्रयोज्यत्वं साधुशब्दप्रयोगे, तत्प्रयोज्यत्वं पुण्ये।

तृतीये प्रयोजनत्वसामान्यं स्वज्ञाप्यज्ञाप्यत्वं स्वं व्याकरणं तज्ज्ञाप्या शुद्धाशुद्धप्रक्रिया तज्ज्ञाप्याः रक्षादयः। अवान्तरत्वन्तु अभ्युपचयमात्रम्। प्राधान्येन तात्पर्यविषयीभूतार्थप्रसङ्गादर्थान्तिरप्रतीतिः सोऽभ्युपचयः।

**अत्र विशेषतः**

तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते, इत्युक्त्या[२९] व्याकरणेन ब्रह्मणो ज्ञानं जायते इत्युक्तम्, ३०आत्मावाऽरे द्रष्टव्यः इत्यादि श्रुत्या आत्मज्ञानं प्रति वेदान्तवाक्यश्रवणं प्रयोजकत्वेन प्रतीयते, एवं सति ब्रह्मतत्त्वज्ञानम्, व्याकरणेन, वेदान्तश्रवणेन वेति संशयः। अत्रोच्यते-यद्यपि श्रोतव्यः श्रुति वाक्येभ्यः इत्यादिनैकविधवाक्येन, ब्रह्मज्ञाने वेदान्त श्रवणस्यैव प्रयोजकता प्रतीयते तथापि वेदान्ताधि कारित्वोपपत्तेय-साधनचतुष्टयसम्पत्तिरावश्यकीति तत्र-तत्र वेदान्तसारादिग्रन्थेषु बहुशोपलभ्यते। तत्र [३१]साधनानि नित्यानित्यवस्तुविवेकः इहामुत्रफलभोगविरागः शमदमादिषट्कसम्पत्तिः मुमुक्षुत्वञ्च। तत्र प्रमाणान्युक्तानि, तदनुसारेण निष्कामकर्मानुष्ठानादिना शुद्धान्तःकरणस्यैव शमादिषट्कसम्पत्तिः, अधिकारित्वोपपत्तये आवश्यकी। तत्र यथान्तःकरणशुद्धिः यागादिनिष्कामकर्मणामनुष्ठानेनान्तःकरणशुद्धिः तथैव 'तृणारणिमणि' न्यायेन साधुत्वज्ञानपूर्वकसाधुशब्दप्रयोगेणापि भवतीति सिद्धान्तः। तथा चोक्तं [३२]वैयाकरणबृहद्भूषणे, इरश्प् एवञ्च प्रकृतिप्रत्ययादिभिर्व्युत्पादनपूर्वकं तज्ज्ञानं तत्प्रयोगद्वारा शरीरादिशुद्धिः यज्ञादिनिखिलकारणस्येति तथाचोक्तम्।

**तद्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।**[३३]

---

२८. साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।
अविच्छेदेन शब्दानामिदं स्मृतिनिबन्धनम्।। वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिकासंख्या १४२

२९. यदेकं प्रक्रियाभेदैर्बहुधा प्रविज्यते।
तद्व्याकरणमुपगम्य परं ब्रह्माधिगम्यते।। वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिकासंख्या २२

३०. बृहदारण्यकोपनिषदि

३१. वेदान्तसारे साधनचतुष्टये

३२. वैयाकरणबृहद्भूषणम्

३३. वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिकासंख्या १४

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥

अत्रातीतविपर्यासः केवलामनुपश्यति।
छन्दस्यश्छन्दसां योनिमात्माछन्दोमयीं तनुम्॥[३४]

इदमेव सक्तुमिव तितउना इति व्याख्यानमहाभाष्योद्योते स्पष्टम्-अयं भावः - ये शास्त्रतः प्रकृतिप्रत्ययविभागेन साधून् ज्ञात्वा शास्त्रार्थध्यानवन्तः मानसज्ञानेन वाचमसाधुभ्यः पृथक्कृतवन्तः ते तज्ज्ञानपूर्वकैः साधुशब्दप्रयोगैर्लब्धान्तःकरणशुद्धयः सख्यानि सायुज्यनि प्राप्नुवन्तिः। केन सायुज्यानीत्यस्य बोधनायायमेष दुर्गो मार्गः ब्रह्मरूपस्तमात्मना सह समानख्यातयः व्यक्तभेदाः सन्त इति यथासामर्थ्यं लिखित्वा विरमामीति।

---

३४. वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिकासख्या १६-१७

# वास्तुशास्त्रानुसारं ग्राम/नगरवास-विचारः

डॉ. सुभाषचन्द्रमिश्रः

## "वास्तु" एवं वास्तुपुरुषः[1] -

वस्धातोः समुत्पन्नः शब्दः अथवा यस्मिन् जनाः वसन्ति इति वास्तु। वास्तु- शब्दः निवासयोग्यस्य भवनस्य समानार्थी वर्तते। अस्य वास्तुशब्दस्य अर्थोऽयं वर्तते यत्र मनुष्याः निवसन्ति, कार्याणि वा कुर्वन्ति तत् वास्तुः। भारतीयज्योतिषशास्त्रे संहितास्कन्धान्तर्गते वास्तुशास्त्रं फलितज्योतिषशास्त्रस्य मुख्यविषयः वर्तते। वास्तुस्कन्धे गृहनिर्माणम्, जीर्णोद्धारः, गृहारम्भविधिः, वर्गादिज्ञानम्, वर्गकाकिणीविचारः, ग्रामवासविचारः, ग्रामवासफलम्, दिक्शोधनम्, दिक्विचारः, भूमिभेदप्रभेदाः, भूमिशोधनम्, शल्योद्धारः, खात्विधिः, राहुमुखवशात्खातज्ञानम्, पिण्डानयनम्, मेलापकविचारः, तिथिवारविचारः, आयादिसाधनम्, राशिवशात् द्वारस्थापनम्, द्वारविचारः, आयादिसाधनम्, गृहायुर्निर्णयः, शल्यानयनम्, अहिबलचक्रज्ञानम्, प्रासादनिर्णयः, दुर्गनिर्माणं गृहारम्भमुहूर्तः, शिलान्यासविधानम्, वृषवास्तुचक्रविचारः, कूर्मचक्रज्ञानम्, कुम्भचक्रविचारः इत्यादयः विषयाः, प्रधानतया वर्णिताः सन्ति। निम्नविधायिकाः संरचनाऽपि वास्तुशब्दनाम्ना ज्ञायते यथा- यत्र गृहस्वामिनः निवसन्ति, तदेव गृहम्, प्रसादस्य मन्दिरस्य वा व्यावसायिक-केन्द्रस्य स्थानं सर्वं वास्तुशब्देन गृह्यते।

एतच्छात्रमस्माकं वैदिकपरम्परायाः प्राचीनशास्त्रमस्ति। अस्य शास्त्रस्याधारभूताः सिद्धान्ताः सन्ति प्राकृतिकशक्तीनां पञ्चमहाभूतानाञ्च सामञ्जस्य स्थापनम्।

प्राचीनकालात् इयं कथा प्रचलिता वर्तते, यदा अन्धकासुरस्य वधकाले भगवतः शंकरस्य ललाटात् पृथिव्यां ये स्वेदविन्दवः पतिताः, तेभ्यः एको भयंकरः विराट-पुरुषः प्रकटितोऽभवत्, तस्य

---

१ पुरा कृतयुगे ह्यासीन्महद्भूतं समुत्थितम्। व्याप्यमानं शरीरेण सकलं भुवनं ततः।।
तद्दृष्ट्वा विस्मयं देवा गताः सेन्द्रा भयावृताः। ततस्तैः क्रोधसन्तप्तैर्गृहीत्वा तमथासुरम्।।
विनिक्षिप्तमधोवक्त्रं स्थितास्तत्रैव ते सुराः। तमेव वास्तुपुरुषं ब्रह्मा कल्पितवान् स्वयम्।।
वृ. वा. मा., वास्तुपुरुषस्वरूपम् श्लो.-1,2,3,
किमपि किल भूतमभवद्रुन्धानं रोदसी शरीरेण। तदमरगणेन सहसा विनिगृह्याधोमुखं न्यस्तम्।।
यत्र च येन गृहीतं विबुधेनाधिष्ठितः स तत्रैव। तदमरमयं विधाता वास्तुनरं कल्पयामास।।
वास्तुसौख्यम्- 1/9,10

मुखो विकराल आसीत्। सः अन्धकनाम राक्षसः रक्तपानं कुर्वन्नपि क्षुधापीडित आसीत्। सः त्रैलोक्यविनाशाय उद्यतः आसीत्, ततः शंकरादयो देवाः तं राक्षसं पृथिव्यां मधोमुखं सुरचप्य तदुपरि सुस्वाप्य सर्वे देवाः निवासं कृतवन्तः तत एवं स वास्तुपुरुषरूपेण प्रथितोऽभूत्।

वास्तुविद्यायाः ज्ञानं शंकरत एव सर्वे स्वीकुर्वन्ति। शंकरतः, पराशरः, पराशरात् वृहद्रथः, वृहद्रथात् विश्वकर्मा वास्तुशास्त्रस्य ज्ञानं प्राप्तवान्। विश्वकर्मणा जगद्धिताय वास्तुपुरुषोत्पत्तिः भविष्यपुराणेऽपि वर्णितास्ति। सर्वप्रथम कोऽपि जनः (गृहस्वामी) यम नगरे ग्रामे वा निवसितुमिच्छति तत्स्थानस्य गृहाधिपतेः च नामाक्षरमध्ये काकिणीविचारो भवति।

**ग्रामवासे वर्गकाकिणीः विचारः[२]-**

ग्रामवासविचारे काकिणीयोगदानमपूर्वमस्ति। काकिणीवर्गविचारे यत् साधनम् अपेक्षितम् अस्ति तद् अस्ति, स्ववर्गपरवर्गस्य च ज्ञानम्। स्ववर्गसंख्यां द्विगुणं विधाय परवर्गस्य संख्यायाः योजयित्वा, अष्टसंख्यया विभाज्य यस्य वर्गस्य शेषमधिकम् अस्ति तद्वर्गः ऋणी भवति।[३]

**स्पष्टार्थ चक्रः**

| वर्गः | अवर्गः | कवर्गः | चवर्गः | टवर्गः | तवर्गः | पवर्गः | य वर्गः | शवर्गः |
|---|---|---|---|---|---|---|---|---|
| वर्ग स्वामीः | गरुड़ः | मार्जारः | सिंहः | श्वा | सर्पः | मूषकः | गजः | शशकः |
| वर्गदिक् | पूर्वदिक् | आग्नेय दिक् | दक्षिण दिक् | नैऋत्य दिक् | पश्चिम दिक् | व्यायव्य दिक् | उत्तर दिक् | ईशान दिक् |
| शत्रुयोनिः | सर्पः | मूषकः | गजः | शशकः | गरुड़ः | मार्जारः | सिंहः | श्वा |
| शत्रुदिक् | पश्चिम दिक् | वायव्य दिक् | उत्तर दिक् | ईशान दिक् | पूर्व दिक् | आग्नेय दिक् | दक्षिण दिक् | नैऋत्य दिक् |

उदाहरणम् यथा- पवनः नामकः व्यक्तिः रामपुरोपनगरे निवसनमिच्छति। रामपुरोपनगरे गृहनिर्माणं शुभमशुभं वा इति विचारार्थं रामपुरोपनगरस्य वर्गसंख्यां द्विगुणं कृत्वा अर्थात् ७ x २ = १४ पवननामकव्यक्ते वर्ग संख्यायां योजिते।

६ + १४ = २० अष्टमिर्भक्ते शेषः ४ एवं पवनस्य वर्ग संख्या द्विगुणिता ६ ग २ = १२, रामपुरग्रामस्य संख्यायां योजिते १२ + ७ = १९ अष्टमिर्भक्ते शेषः ३ अर्थात् योऽधिकः स ऋणीभवेत्। तदनुसारं पवनः रामपुरोपनगरे निवसेत् तदा शुभकारकः भवेत्।

---

२ स्ववर्ग द्विगुणं कृत्वा परवर्गेण योजयेत्। अष्टभिस्तु हरेद्भागं योऽधिकः स ऋणी भवेत्।। वृ. वा. माला श्लो.- १८

३ अकारादिषु वर्गेषु दिक्षु पूर्वादिषु क्रमात् गृध्रमार्जारसिंहा श्वसर्पाखुगज शाशकाः।।
दिग्वर्गानामिय योनिः स्ववर्गात् पञ्चमो रिपुः
रिपुवर्गपरित्यञ्च शेषवर्गाः शुभप्रदाः।। मु.चि. मपीयूषधारा टीका १२/१

**ग्रामनगरयोः गृहनिर्माणस्य च सम्भावितदिक्विचारः -**

तत्पश्चात् ग्रामस्य नगरस्य वा स्थितिः नवभागेषु विभज्य मध्ये, वृषभ, मिथुनः, कर्कः, सिंहः, मकरः राशीनां, तस्य गृहस्य मध्यभागेन निवसेयुः तथा वृश्चिकराशेः पूर्वस्यां, मीन राश्येः आग्नेयदिशि, कन्याराशेर्दक्षिणदिशि, कर्कराश्येः नैऋत्यकोणे, धनुराशेः पश्चिमदिशि तुलाराशेः वायव्यकोणेः, मेषराशे उत्तरादिशायां, कुम्भराशेः ईशानकोणे निवासं न कर्तव्यम्[४]।

**निवासाय अशुभदिशि चक्रम्**

| वायव्यकोणः | | उत्तरदिशि | | ईशानकोणः |
|---|---|---|---|---|
| पश्चिम दिशि | तुलाः | मेषः | कुम्भः | पूर्वदिशि |
| | धनुः | वृषः, कर्कः, मिथुनः, सिंहः मकरः | वृश्चिकः | |
| | कर्कः | कन्या | मीनः | |
| नैऋत्यकोणः | | दक्षिणदिशिः | | आग्नेयकोणः |

दिग्बलानुसारं गृहनिर्माणस्य परम्पराऽपि मिलति। तस्यानुसारेण अकारादि वर्गः पूर्वादि-दिशि स्वामिनः दिशायाः बलिनोऽभवत्। अर्थात् अवर्गः, कवर्गः, चवर्गः, तवर्गः, टवर्गः, पवर्गः, यवर्गः, शवर्गश्चेति। अत्र प्रत्येक् वर्गात् पञ्चमः वर्गः तस्य शत्रुः भवति। अवर्गादीनां स्वामिनः यथाक्रमेण गरुणः, मार्जारः, सिंहः, श्वानः, सर्पः, मृगः, शशकश्च नाम्ना ज्ञायते। स्ववर्गात् पञ्चमस्थानीयवर्गः शत्रुः भवति। शत्रुवर्गीयं स्थानं निवासाय नोपयुक्तो भवति।

**वर्गचक्रः**

| वर्गः | अ | क | च | ट | त | प | य | श |
|---|---|---|---|---|---|---|---|---|
| तस्यांकः | ८ | ५ | ६ | ४ | ७ | १ | ३ | २ |

नक्षत्रात् स्वनामनक्षत्रं यावद्गणयेत् तदा पञ्चनक्षत्राणि नराकृतिः चक्रस्य मस्तके न्यसेत् तेषु मध्ये स्वनाम-नक्षत्रमायाति तत्र लाभो भवति, त्रीणि नक्षत्राभिमुखे विन्यसेत् फलं धननाशः, पञ्चनक्षत्राणि कुक्षौ स्थाप्यते तस्य फलं धन-धान्यलाभः, षट्संख्या नक्षत्राणि पादे स्थापयेत् तस्य फलं स्त्रीनाशः, एवं च दरिद्रतायाः, एकं नक्षत्रं पृष्ठभागे न्यसेत् तस्य फलं पदहानिः, चत्वारि नक्षत्राणि नाभौ स्थापयेत् तस्य फलं सम्पत्तिप्राप्तिः, एकं नक्षत्रं गुदाप्रदेशे तस्य फलं गृहस्थजीवने भयं पीडां च, एकं नक्षत्रं वामहस्ते तस्य फलं भेदः[५]।

४ गोसिंहनक्रमिथुनं निवसेन्न मध्ये ग्रामस्य पूर्वककुभोऽलिझषाङ्गनाश्च।
कर्को धनुस्तुलभमेषघटाश्च तद्वद्वर्गाः स्वपञ्चमपरा बलिनः स्युरैन्द्र्याः।।
मु. चि. मणि. १२/२एवं च बृहद्वास्तुमाला श्लोक-१९

**शिवावल्यनुसारेण ग्रामवासविचारः-**

ग्रामवासविचारे रात्रिकाले निर्जनस्थाने यत्र विचार आवश्यक अस्ति तत्र मांसादि युक्तं ओदनं निधाय तत्र स्थानात् किञ्चिद् दूरं उपविश्य शिवायाः रोदनं श्रुत्वा ततः स्थानात् फलं विचारयेत। यदा श्रृगालस्य रोदनध्वनिः नैर्ऋत्यकोणे भवति तदा तद् स्थानं वासयोग्यं न भवति। यदा ध्वनि। दक्षिणदिशि सा कल्याणकारी भवति। अग्निकोणात् ध्वनिः आयाति तदा भयं भवति, पूर्वदिशि ध्वनिवशात् उच्चाटनम्, ईशानकोणे ध्वनिवशात् मरणम् एवं च उत्तरदिशि ध्वनिः आनन्दकारी भवति। यदा श्रृंगालः चतुर्भिः दिशिः परिभ्रम्यः ध्वनिं कुर्वन्ति तदा तत्र स्थानम् वासयोग्यं न भवति[६]।

| पूर्वः | आग्नेयः | दक्षिणः | नैऋत्यः | पश्चिमः | वायव्यः | उत्तरः | ईशानम् | अष्टादि | निःशब्दः |
|---|---|---|---|---|---|---|---|---|---|
| उच्चाटनम् शत्रुकलहः | महानभयं | कल्याणं | अशुभं | आनन्दः | अल्पभयं | शुभं | मरणं | अशुभं | अतिशुभं |

**विप्रादिवर्णानां प्रशस्तभूमिः –**

चतुरेभ्योः वर्णेभ्यो भिन्न-भिन्नवर्णानां भूमयः प्रशस्ताः सन्ति। ब्राह्मणानां कृते श्वेतवर्णभूमिः सत्वगुणप्रधानाऽस्ति अतः अयं भूमिः ब्राह्मणानां कृतेः प्रशस्तभूमिः अस्ति। अनेनैव प्रकारेण क्षत्रियवर्णकृते रक्तवर्णभूमिः, सः भूमिः रजोगुणयुक्तः एवं च तमोगुणयुक्ता अस्ति, अतः क्षत्रियवर्णकृते प्रशस्तभूमिः अस्ति। रजोगुणयुक्तः समवाय पीतवर्णभूमिः वैश्यानां कृते प्रशस्ताऽस्ति। कृष्णवर्णाः तमोगुणयुक्ता भूमिः शूद्राणां कृते प्रशस्तास्ति।

यदा गन्धानुसारेण विचारः भवति, तर्हि, घृतगन्धाभूमिः ब्राह्मणानां कृते, रक्तगन्धाभूमिः क्षत्रियाणां कृते, एवं च मद्यगन्धाभूमि शूद्राणां कृते प्रशस्ता भवति अन्नगन्धाभूमिः वैश्यानां कृते,

---

५ मस्तके पञ्चलाभाय मुखे त्रीणि धनक्षयः।
कुक्षौ पञ्च धनं धान्यं षट् पादे स्त्रीदरिद्रता।
पृष्ठे चैकं पादहानिर्नाभौ चत्वारि सम्पदः।
गुह्ये चैकं भयं पीडा हस्त चैकं तु क्रन्दनम्।
वामे चैकं करे भेदो ग्रामचक्रं नराकृतिः।
गणयेज्जन्मनक्षत्रं ग्रामनक्षत्रतस्सदा।।
वास्तुरत्नावली- पृ. सं.- ५ एवं वृ. वा. माला, गृहारम्भविधिः श्लोक- १०,११,१२

६ नैऋत्ये हि शिवा रौति तदा वासं न कारयेत्।
दक्षिणे रौति कल्याणं वह्निकोणे भयं महत्।।
ईशाने मरणं प्रोक्तमुत्तरे कुरु सर्वतः।।
वासं वायव्यकोणेषु भयं किञ्चित्प्रजायते।
पश्चिमे च यदा रौति तदाऽऽनन्दः प्रकीर्तितः।
पूर्वेप्युच्चाटनं ज्ञेयं कलिर्वा रिपुभिस्सह।
अष्टदिक्षु यदा रौति तदा वासं न कारयेत्। वास्तुरत्नावली, पृ. – ६
एवं च वृ. वा. माला श्लो.- १३-१६

तृणानुसारेण भूमि: विचार: अनेनैव प्रकारेण भवति।

कुशायुक्ता भूमि: ब्रह्मणानां कृते, क्षत्रियाणां कृते मुञ्जयुक्तभूमि: वैश्यानां कृते काशयुक्ताभूमि:, एवञ्च शूद्राणां कृते तृणयुक्ताभूमि: प्रशस्ता भवति।

मधुररसयुक्ता भूमि: ब्राह्मणानां कृते, कषाययुक्ता: भूमि: क्षत्रियाणां कृते, अम्लरसयुक्ताभूमि: वैश्यानां तथा च कटुरसयुक्ता भूमि: शूद्राणां कृते निवासाय उत्तमा भवति[७]।

"वशिष्ठसंहितायां" वर्णपरत्वेन भूमिविचार: अनेनैव प्रकारेण भवति।[८] (१) ब्राह्मणानां-शुक्लवर्णभूमि: (२) क्षत्रियाणां रक्तवर्णभूमि: (३) वैश्याणांपीतवर्णभूमि: (४) शूद्राणां - कृष्णवर्णभूमि:।

**प्रशस्त भूमि:[९]-**

प्रशस्तभूमे: विवेचनं कुर्वता आचार्यवराहमिहिरेण भवननिर्माणार्थं विवेचनं कृतम्। बृहत्संहितायां यद् प्रतिपादितं तस्यानुसारेण यस्यां भूमौ, औषधय: उत्पद्यन्ते, यद् भूमि: मधुरा, स्निग्धा:, सुगन्ध च भवति, यत्र भूमितलं समतलं भवति यत्र सुखमनुभूयते, तेषु स्थानेषु गृहनिर्माणं शान्तिप्रदम् भवति। स्पष्टार्थं यस्य भूखण्डस्य मृतिका उर्वरका, स्निग्धा, सुगन्धा, च भवति तद् भूखण्डं भवननिर्माणार्थं प्रशस्तं एवं च यस्य भूखण्डस्य मृतिका विषमधरातलयुक्ता एवं च स्फुटिता भवति तत्स्थानं भवननिर्माणार्थ उपयुक्तं न स्यात्।

---

७ सिता रक्ता च पिता च कृष्णा वैव क्रतान्मही।
विप्रादीनां हि वर्णानां सर्वेषामथवा हिता।। समराङ्गणसूत्रधार 8.48
एवं
सितरक्तपीतकृष्णा विप्रादीनां प्रशस्यते भूमि:।
गन्धश्च भवति यस्यां घृतरुधिरान्नाद्यमद्यसम:। बृहत्संहिता वा. वि. 96, 97
कुशयुक्ता शरबहुला दर्वाकाशावृता क्रमेण मही।
ह्यनुवर्ण वृद्धिकरी मधुरकषायाम्लकटुका च।

८ वर्णपरत्वेन भूवो वर्णग्रन्धविचारोवशिष्ठसंहितायाम्।
श्वेता शस्ता द्विजेन्द्राणां रक्ता भूमिर्महीभुजाम्।
विशां पीता च शुद्राणां कृष्णाऽन्येषां विमिश्रिता।।
मधुर: कटुकस्तिक्त: कषायश्च रसा: क्रमात्।
विप्रक्षत्रियवैश्यानां शूद्रस्य च शुभप्रदा:।। वास्तुरत्नावली पृ.- १३ वृहत्संहिता-वास्तु विद्याध्याय: श्लो.- ८८

# ज्योतिषशास्त्रे स्वप्नविचारः

डॉ. भारतभूषणमिश्रः

अशान्तस्य मनसः सुप्तावस्थायां विक्षेप एवं स्वप्नः। स च दिवा रात्रौ वा भवति। परन्तु अत्र प्रबन्धे ब्राह्ममुहूर्ते दृष्टस्य स्वप्नस्य विचारः प्रस्तूयते। मानवजीवनदर्शने स्वप्नस्य परम्परा अतिप्राचीना वर्तते। मानवमनः चञ्चलत्वाद् विश्रामाऽवस्थायामपि स्थिरं न भवति, अपि तु विभिन्नभावनाग्रस्तं निद्रावस्थायामपि विभिन्नसन्दर्भे तल्लीनं भवति। निद्रावस्थायां यत्र केचन हर्षातिरेकेण प्रसन्नाः भवन्ति तत्रैव केचन भयवशाद् बिभ्यति। यस्य दर्शनम् अद्यापि अस्माकं समाजे भवत्येव।

वस्तुतः विचारणीयोऽयं विषयः यत् स्वप्नो नाम किमिति? अत्रोच्यते- अस्माकं मनसि अस्फुटिताया इच्छायाः प्रकाशनमेव स्वप्नः। यतो हि स्वप्ने तादशी एवोपलब्धिर्भवति यस्योपरि अस्माभिः कदापि न विचारः कृत अथवा यस्य कार्यस्य कृते मनसि कल्पना सञ्जायते, परन्तु प्राप्तुम् असफलतां प्राप्यते। विशेषरूपेण या काऽपि इच्छा अस्माभिः समाजभयाज्जाग्रदवस्थायां न पूर्णतामेति सा एव स्वप्नें मानसिकीं भ्रान्तिं ददाति। यथोदाहरणं कामवासना-प्रसङ्गे सामान्यजनानाम् उत वा यूनाम् अनुभवेन पुष्टिर्भवति। अस्मिन्नेव प्रसंगे प्रसिद्धेन मनोवैज्ञानिकेन प्रो० सी० जी० जुंगमहोदयेन प्रोक्तमस्ति यत् स्वप्ना आदेशत्मका भवन्ति, स्वप्ना वर्तमानस्थितेः सूचका अपि भवन्ति, यस्योपरि चर्चा जुंगमहोदयेन "माडर्न मैन इन सर्च आफ ए सोल" नामके स्वग्रन्थे कृता[१]।

ज्योतिषशास्त्रे स्वप्नविचारविषये बृहती चर्चा उपलभ्यते। तत्रान्वेषणेनोपपद्यते यत् स्वप्नः पूर्वजन्मार्जितभावनया ग्रस्तो भवति? अनेनैव कारणेन शकुनविदो जना अपि ज्योतिर्विद्भिः सह स्वप्ने द्रष्टव्यतथ्यानां मुहूर्तमाध्यमेन विचारं कुर्वन्ति[२]। अत्र स्वप्नः द्विविधो जायते। तत्राद्यो दिवास्वप्नः, अपरो निशास्वप्नश्च, एवमत्र। तत्राद्यो दिवा दृष्टः स्वप्न एव दिवास्वप्नो भवति, स्थलेऽस्मिन् वास्तविकता नोपलभ्यते केवलं मानवस्य कुण्ठितभावनाया निदर्शनमात्रमेव भवति। अथवा स्नेहवशात्

---

१. Dream may give expression to inductable trughts to philosophical pronouncements, illurions, wild fantasises, memores, plans, anticipatians, irrationa experiences, even telephtatic vision and heaven knows what besides. Modern Man is search of soul e.g. Jung-Lond-1936, Page-12. 13.

२. अग्निपुराणम्-अध्याय-२९

प्रेम्णा वा तं प्रति अशुभतथ्यानां दर्शनं स्वप्ने भवति यथोक्तं कदासेन "अतिस्नेह:–पापशङ्की"। एवमेव रात्रौ दृष्ट: स्वप्नो निशास्वप्नो भवति, अयं द्विधा विभज्यते, प्रथमो ब्राह्ममुहूर्तकालिक: स्वप्न:, अपर: ब्राह्ममुहूर्तेतरकालिक: स्वप्न:। एवमत्र रात्रिशेषे रात्रेश्चतुर्थप्रहरे वा दृष्ट: स्वप्नो ब्राह्ममुहूर्तकालिक: अन्यस्मिन् काले रात्रौ दृष्ट: स्वप्न: ब्राह्ममुहूर्तेतरे परिगण्यते। वास्तविकस्वरूपे स्थानस्थितरहस्यानां भेदनेऽद्यापि काठिन्यमस्ति, अन्य रहस्योद्घाटनस्य प्रयास: इदानीं यावद् न सफलीभूत: ज्योतिषशास्त्रस्य प्राचीनार्वाचीनदैवज्ञेषु समन्वयो यत्र दृश्यते तदित्थं यत् रात्रिशेषस्य चतुर्थप्रहरे दृष्टस्वप्नानां फलानि सप्त दिनानि यावत् प्राप्यन्ते, एवं तृतीयप्रहरे दृष्टा: स्वप्नास्तु मासाभ्यन्तरे, एवञ्च द्वितीयप्रहरात्पूर्वमेव दृष्टा: स्वप्ना वर्षं यावत् फलं दिशन्ति। एवमेव दिवास्वप्नास्तु महत्त्वहीना भवन्ति एव। परनतु यदि रात्रौ एकाधिक: स्वपन: दृष्ट: तत्र अन्तिम: स्वप्न: एव फलं ददाति। प्रसङ्गेऽस्मिन् विचारणीयो भवति, यदत्र केवलं स्वस्थजनानां स्वप्न एव परिगण्यते। स्वप्नस्याभिर्भाव आदिकालत एवोपलभ्यते। मानवस्य मनसि स्वप्नो जिज्ञासाया: विषय: अस्तीति, यतो हि वेदेऽपि अस्योपलब्धि: भवतीति। यथा ऋग्वेदस्य तृतीये मण्डले प्राप्यते यद् उषस्देव्या: दु:स्वप्नस्य प्रशमनार्थं प्रार्थना कृता–

"यच्च गोषु दु:स्वप्न्यं यच्चास्मे दुर्हितार्दिव:। त्रितायतद्विभावर्याप्त्यायपरावहानेहसो व ऊतय: सुऊतयो वा उतय।।[3]

अनेन प्रकारेण ऋग्वेदे इव अथर्ववेदेऽपि[4] स्वप्नस्य मीमांसा प्राप्यते। स्वप्नस्याधार: धर्मेण-शरीरेण च सम्बन्धितो भवति। यथा–

**यो न जीवोऽसि न मृतो . . . अमृतगर्भोऽसि स्वप्न: (६-४६-१)**
**दुष्वन्यं सर्वं द्विषते निर्दयामसि (१९-५७-५)**
**अस्वप्नेन सुकृत: पुण्यमायु: (१९-५६-५)**
**तस्मै स्वप्नाय दुधराधिपत्यम्। (१९-५६-३)**
**नैतां विदु: पितरो नोत देवा:। (१९-५६-४)**
**तेना सहस्येना वयं नि जनान् स्वापयामसि (४-५-१)**
**स्वप्न स्वप्नाभिकरणेन सर्वं निष्वापया जनम् (४-५-७)**

आयुर्वेदस्य चरकसंहितायां वातपित्तादिजन्या: स्वप्ना एवञ्चान्ये षड् विभागा: स्वप्नस्य प्राप्यन्ते यथा –

**मनोवहानां पूर्णत्वाद् दोषैरतिबलैस्त्रिभि:,**
**स्त्रोतसां दारूणान् स्वप्नान् काले पश्यति दारूणे।**

---

३. ऋग्वेदसंहिता– ३/४४/१४

४. देवीनां पत्नीनां गर्भ यमस्य कर यो भद्र: स्वप्न:।
स मम य: पापस्तद्द्विषते प्रहिण्नुम:।
मा तृष्टानामसि कृष्ण शकुनेर्मुखम्।। अथर्ववेदसंहिता ९/५७/३

नीतिप्रसुप्तः पुरुषः सफलानफलानपि।
इन्द्रियेण मनसा स्वप्नान् पश्यत्यनेकधा।।

दृष्टं श्रुतानुभूतं च प्रार्थितं कल्पितं तथा।
भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः।।[५]

अनेन वातादिदोषजन्याः सप्तविधाः स्वप्नाः सन्ति। प्रोक्तमस्ति चरकेण–

तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत्।
दिवास्वप्नमहतिह्रस्वमतिदीर्घञ्च बुद्धिमान्।।[६]

पञ्चतन्त्रे स्वप्नस्य कारणं निरूपितमस्ति। यथा–

यद् वाञ्छति दिवा मर्त्यो वीक्षिते वा करोति वा।
तत् स्वप्नेऽपि तदभ्यासाद् ब्रूते वाऽथ करोति वा।।

शुभं वा यदि वा पापं यन्नृणां हृदि संस्थितम्।
सुगूढमपि तज्जज्ञेयं स्वप्नवाक्यात्तथा मदात्।।[७]

ओल्डटेस्टामेण्टपत्रकायां प्राप्यते यत् स्वप्नास्तु दिव्यविज्ञप्तेः न्याययुक्तः स्रोतः स्वीकृतः अस्ति।[८] मुसलिमधर्मावलम्बिनां मतानुसारं स्वप्नावस्थायां धर्मिकजनानाम् आत्मा ईश्वरस्य पार्श्वे भ्रमति, अत एव स्वप्नाः सत्ययुक्ता भवन्ति।[९] इनसाइक्लोपीडिया आफ ब्रिटैनिका" नामके ग्रन्थे प्रेतानामभ्यागमन- रूपे स्वप्नाः न स्वीकृताः सन्ति। अपि तु दैवसंकेतरूपे विद्यन्ते। यस्य संकेतस्य निर्वचनं सादृश्याधारेण क्रियते।।[१०] "इन्साइक्लोपीडिया आफ रिलीजन एण्ड इथिक्स" मतानुसारं स्वप्ने देवा जनस्य कृते विशेषरीत्या स्वकीयाया इच्छायाः प्रकाशनं कृत्वा अनागतस्य सूचनां ददति[११]

५. चरकसंहिता ५/५/४०.४२

६. चरकसंहिता-इन्द्रियस्थान ५

७. पंचतन्त्रं मित्रभेदः श्लो०१४४-४५

८. In the old dreams were accepted as legitimate source of divine comunication Folklore by Folklore soceity London-Vol 65-66(1954 and 1922) P 336.

९. All said that whenever a beliver goes to sleep, his sould is taken close to the throne of God so that whatever dreams he Sees is true (the wild Rue-B.A. Donaldson. 1938. P. 174).

१०. Dreams are not only considred visit for Ghosts but often also supernatural signs to be interpreted symbolically-Encyclopedia Britannica-9th Ed Vol. 7 p. 293.

११. In the dream the diety was belived to reveal himself in special way to the individual. Declaring the will of heaven and predicting the futrue. Encyclopedia of Religionand Ethicss-1911. Vol.-5 P- 33.

एवमत्र मन्यते यत् स्वप्ने मानवस्यात्मा शरीरं त्यक्त्वा सूचनार्थम् इतस्तत: भ्रमण करोति, अनेन कारणेन अद्यापि प्रसुप्तजनानां निद्राभङ्गेऽस्माभि: दोषोऽनुभूयते।[१२]

पैराणिकयुगेऽपि स्वप्नविचारे बहव: विषया: भेदाश्च प्राप्यन्ते। पौराणिककालानन्तरं कालिदास-बाण-श्रीहर्ष-प्रभृतय: अनेके कवय:। वस्तुतस्तु स्वप्ना मानवजीवनदर्शनस्याङ्गानि सन्ति। रात्रौ सुसुप्तावस्थायामपि न ज्ञायते यत् का शक्ति: वर्तते या स्वकीयकोमलस्पर्शेन विचित्रलोके भ्रामयति य: लोक: स्वप्नलोक: उच्यते। एवमत्र स्वप्नलोके भूर्लोके इव सुख-दु:खयो: भय-क्रोधयो: एवञ्च हासपरिहासयोश्च प्राप्तिर्भवतीति।

सामान्यतया प्रश्नो जायते यत् किमेतादृश: लोक: सम्भवति? अस्तु सम्भवति एष लोक:। प्रथमदृष्ट्या उच्यते यत् द्रष्टा तस्मिन् क्षणे स्वप्नलोक: अवश्यमेव परिलक्ष्यते। द्वितीयदृष्ट्या स्वप्नस्य चिन्ता निर्मूलं प्रतिभाति, परन्तु जगति परिलक्ष्यते यत् स्वप्ने दृष्टं तथ्यं न सर्वथा निर्मूलं भवति, अपि तु बहुधास्वप्नेन पूर्णतया पूर्यते। अनेन कारणेन यदा-कदा काऽपि घटना घटते तदा कंचन जना: कथयन्ति यत् मया एतत्सम्बन्धे स्वप्न: ह्यो: दृष्ट आसीद्, किं तस्य पूर्तिर्जाता? अस्तु स्वप्नस्य वैचित्र्यम् एतत्।

नैषधीयचरितकारेण आचार्यश्रीहर्षेण एतादृश: प्रसङ्ग: उपस्थापित: अस्ति यत् दमयन्ती अपि स्वप्ने नलं ददर्श तथा नलं पतिरूपे लब्धवती। यतो हि स्वप्नस्तु पूर्वजन्मना प्रेरित-भावनया स्वकीयं स्थितिप्रदर्शनं करोति।[१३] यथा–

**मनोरथेन स्वपतीकृतं नलं निशि क्व सा न स्वपती स्म पश्यति।**
**अदृष्टमप्यर्थमदृष्टवैभवात्करोतिसुप्तिर्जनदर्शनातिथिम्।।[१४]**

**निमिलितादक्षि युगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात्।**
**अदर्शि संगोप्य कदाप्यवीक्षितो रहस्यमस्या: स महन्महीपति:।।[१५]**

---

१२. The explanation given usually by saveges is that the dream's soul or one of his souls goes away from his body and sees the things he dreams of "Hence the reluctance among many uncivilized people to awaken a sleeper his sould may be shut out or an evil gets in temporarily. Encyclopedia of Religion and Ethics-1911. Vol.-4 P. 776.
During Sleep the superior should leaves the body and goes about its own affairs which become the subsance of dreams. The standard dictionary of Folklore-Mythology and Leged 19944, Vol-1 p 224.

१३. मनोरथेन स्वपतिं कृतं नलं निशि क्व सा न स्वपती स्म पश्यति।
अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिर्जनदर्शनातिथिम्।। नै० १/३९-४०

१४. नै० १/३९

१५. नै० १/४०

स्वप्नविद: मन्यन्ते यत् 'स्वप्नज्ञानं तु मनोजन्यमेव'' परन्तु रात्रौ चतुर्थप्रहरे दृष्टाः स्वप्नाः सत्ययुक्ताः भवन्ति। आचार्यनारायणरामतीर्थमहाभागेन प्रोक्तमस्ति यत् "गोविसर्जनवेलायां दृष्ट्वा सद्यः फलं लभेत्" एवं मल्लिकनाथेन उच्यते यत् "स्वप्नदृष्टस्यार्थस्य जागरे सत्यसम्बादादाश्चर्यम् एवं स्पष्टो भवति यत् रात्रेः चतुर्थचरणे समुत्पन्नस्वप्नाः वास्तविकफलादा भवन्ति। यतो हि राज्ञा नलेन पूर्वरात्रे दमयन्त्या सह संयोगस्याख्यानसम्बन्धिनः स्वप्ना दृष्टा आसन्, द्वितीये दिने च तस्य स्वप्न पूर्तिर्जाता। यथा नैषधे –

**सम्भुज्यमानाद्य मया निशान्ते स्वप्नेऽनुभूता मधुराधरेयम्।**
**असीमलावण्यरदच्छदेत्थं कथं मयैव प्रतिपाद्यते वा।।**[१६]

ग्रन्थान्तरेऽपि स्वप्नानां बहुविवरणं प्राप्यते, यथा बुद्धघोषेण उक्तं पद्मचूणामणिप्रसंगावसरे यद् महात्मनः सिद्धार्थस्य स्वप्नपञ्चकस्य प्रभातवेलायां दर्शनं सिद्धिहेत्वे प्रथमा सूचना आसीदिति।[१७]

एवमेव कादम्बर्यां प्राप्यते यद् राज्ञः तारापीडस्य पत्न्या विलासवत्या मुखे चन्द्रस्य प्रवेशः, एवञ्च मन्त्रिणः शुकनासस्य पत्न्याः क्रोडे पुण्डरीकस्यागमनं पुत्रप्राप्तेः फलसूचकाः स्वप्ना आसन्।[१८] बाणस्य हर्षचरितमहाकाव्ये प्राप्यते यद् एकदा स्वप्ने राज्ञा हर्षवर्द्धनेन ज्वलितसिंहस्य दर्शनं कृतम्, यः पित्रोः नाशं कृतवान्।[१९] एवमेव वेणीसंहारे प्राप्यते यद् राजा दुर्योधनः स्वप्ने स्वकीयं। वक्षः स्थलात् वस्त्रम् अपहृतं पश्यतिः यः मृत्युसूचकः जातः।[२०]

ब्राह्ममुहूर्तेतराणां स्वप्नानां यदि विवरणं दृश्यते तदा प्राप्यते यत् प्रायः [२१]रात्रौ प्रथमप्रहरे दृष्टस्वप्नानां फलानि विलम्बेन प्राप्यन्ते, वाल्मीकिरामायणे प्राप्यते यद् दशरथस्यावसानसमये राज्ञा भरतेन मध्यायां रात्रौ स्वप्नो दृष्टो यत् विकृतकेशयुक्ताः, क्षामवदना मे पितरः उन्नतस्थानात् गोमये

---

१६. नैषधः-७/४२

१७. स्वप्नफचकमर्द्राक्षीत्सुचरित्रनिधः युगे।। पद्मचूड़ामणि–९/५६
(द्रष्ट्वाबुध्यस्वप्नार्थं प्रत्यवेत्य विचक्षणः। निश्चिकायाहमद्यैव निर्वृत्तिं प्राप्नुयामिति।। पद्मचूणामणि ९/५७)

१८. एव च गच्छति काले कदाचिद्राजा क्षीणभूयिष्ठायां रजन्यामल्पावशेष पाण्डुतारके जरत्पारावत पक्षधूम्रे नभसि स्वप्ने सितप्रासादशिखरस्थिताया विलासव्याः करिण्या इव विसवलयमानने सकलकलापूर्ण-मण्डल शशिनं प्रविशन्तमद्राक्षीत। . . . सर्वर्था न चिरेथा न चिरेण मान्धातारमिव धौरेयं सर्वराजर्षीणां भुवनान्द हेतुमात्मजं जनयिष्यति देवी।
बाण-कादम्बरी पूर्व भाग-पृ० ३२४-२६ (स्वप्नविषयचर्चा-भावबोधिनी) पूवार्द्ध। जयशंकरलाल त्रिपाठी।

१९. एकदा तु वासतेय्यास्तुरीये यामे प्रत्युषस्येव स्वप्ने चटुलज्वाला पुँजापिञ्जरीकृत- सकलककुभा दुर्विारणे दवहुतभुजा दह्यमानं केसरिणमद्राक्षीत्। तस्मिन्नेव दावदहने समुत्सृज्य शावकानुत्प्लुप्य चात्मानं पातयन्तीं सिंहीमपश्यत्।
बाण-हर्षचरितम् पंचम उच्छ्वास, पृ०-२५८ (चौखम्भा विद्याभवन प्रकाशन)

२०. राजा अवितथमाह सुवदना। नकुलेन पन्नगशतवधः स्तनाँशुकापहरणं च निमयतमनिष्टोदर्कस्माकं तर्कयानि। भट्टनारायण वेणीसंहार अध्याय-२ पृष्ठ ८३।

२१. (क) वेणीसंहारः द्वितीयाऽङ्क पृष्ठ ८४।

गर्ते पतन्ति, तस्य[२२] फलं मृत्युरूपेण दिनान्तरे सञ्जातम्।[२३] एवमेव सुन्दरकाण्डस्य प्रसंगे दृश्यते यदशोकवाटिकायां सीताया: कृते मर्कटानां दर्शनं लक्ष्मणस्य कृतेऽरिष्टं बधूव[२४] यथोक्तं-

**स्वप्ने मयाऽयं विकृतोऽद्य दृष्ट: शाखामृग: शास्त्रगणैर्निषिद्ध:।**
**स्वस्त्यस्तु रामाय सलक्ष्मणाय तथा पितुर्मे जनकस्य राज्ञ:।।**[२५]

अनेनैव प्रकारेण अश्वघोषस्य बृद्धचरिते प्राप्यते महामायाया गर्भे श्वेतगजराजस्य प्रवेश उत्तमपुत्रप्राप्ते: सूचक: आसीद्।[२६] यथा-

**प्रागगर्भधाना मनुजेन्द्रपत्नी, सितं ददर्शं द्विपुराजमेकम्।**
**स्वप्ने विशन्तं वपुरात्मन: सा न तन्निमित्तं समवाप तापम्।।**

स्वप्नावस्थायां सूर्याचन्द्रमसो: दर्शनं स्पर्शनं वा शुभकारकं भवति। यथा अशोकवाटिकायां त्रिजटया सीताया: अशुभस्वप्नस्य व्याख्यानं राक्षसानां पार्श्वे क्रियते,[२७] तद्यथा-

**तृणाय मत्वा ता: सर्वा वदन्ती स्त्रिजटाऽवदत्।**
**आत्मानं हत दुर्वृत्ता: स्वमासै: कुरुताशनम्।।**

**अद्य सीता मया दृष्टा सूर्य-चन्द्रमसा सह।**
**स्वप्ने स्पृशन्ती मध्येन तनु: श्यामा सुलोचना।।८।।**

ब्राह्मवेलायां स्वप्ने प्रासादारोहरणं समुद्रतरणं वा राज्यप्राप्तिसूचकं भवति।[२८] अनेन प्रकारेण अनेकानि स्थलानि संस्कृतसाहित्ये सन्ति, यत्र ब्राह्मवेलायां समुत्पन्न: स्वप्नविचार: फलञ्च प्राप्यते। साहित्येतरग्रन्थेष्वरि अस्योलब्धिर्भवति।

---

२२. अथ ......... स्वप्ने ........... पारिजातद्रुममद्राक्षीत।
दर्शनानुपदमेव च प्रबुद्ध: प्रबुद्धविभवेन संख्या सह समागमप्राप्तिमचिरभविनीं निश्चैषीत्। धनपाल-तिलकमञ्जरी, पृ. १६८-१६९.

२३. यमेव रात्रि ते दूता: प्रविशन्ति स्म तां पुरीम्।
भतेनापि तां रात्रिं दुष्ट: स्वप्नोऽयमप्रिय:। वाल्मीकीय रामायण अयोध्याकाण्ड-६९/१ एवं ७, १८ (युद्ध काण्ड २७/६-२२)

२४. रामायणम्-सुन्दरकाण्डं ३२/९

२५. वा० सु० सर्ग ३२/९

२६. बुद्धचरितम् १/४.

२७. भट्टि: रावणवध: ८/९९

२८. अपश्यत स फणाकोटौ खंजरीटमहे: पथि।
स्वप्ने प्रसादमारूह्य एवं चौल्लंघितसागरम्।
अचिन्तयच्च शास्त्रज्ञो निमित्तै: शुभशंसिभि:।
एतैर्भूभर्तुरादेशौ ध्रुवमेस्याच्छुभावह:। कल्हण-राजतरंगिणी तरंग ३/२४४-२२५ एवं तरंग ७/७९, ४९७ भी द्रष्टव्य।

वैदिकसाहित्येषु प्राणिनां जाग्रत्-स्वप्न-सुषुप्तयः तिस्रः अवस्थाः प्रतिपादिताः सन्ति। ब्रह्मबिन्दूपनिषदनुसारेण एताः तिस्रोऽपि अवस्था विशुद्धमनसो निमित्तभूताः सन्ति। यतो हि अशुद्धमनसि विषयभोगादीनां संकल्पः प्रायेण उत्थिता एव भवन्ति, परन्तु शुद्धमनसि कामानां प्रायेण अभाव एव तिष्ठति। महोपनिषदि उल्लेखो मिलति यत् स्वरूपाच्च्युतः सन् वासनार्थं मोहे निमज्जनमेव महामोहोऽस्ति। मोहः सप्तधा– (१) बीजजाग्रत् (२) जाग्रत् (३) महाजाग्रत् (४) जाग्रत्स्वप्नः (५) स्वप्नः (६) स्वप्नजाग्रत् (७) सुषुप्तिश्च।[२९] एते मोहाः परस्परं संश्लिष्टाः सन्तः विभिन्नं रूपं दधति। इदानीं एषां लक्षणमुच्यते–

१. बीजजाग्रत्–यथा-नामरहिते निर्मले चेतने सम्भावितं चित्तं जीवादीनां नाम शब्दार्थयोः पात्रतया युक्ताया अवस्थाया नाम बीजजाग्रदित्युच्यते।

२. जाग्रद–यथ अयं अहमस्मि, इदं ममास्ति इति स्वस्मिन् या प्रतीतिः, सा अतिरिक्ताया भावनायाः पूर्वम् उत्पन्ना मोहस्य द्वितीया अवस्था जाग्रद् इत्युच्यते।

३. महाजाग्रत्–यथा-स पुरुषोऽस्ति अयमहमस्मि, इदं वस्तु ममासस्ति, इति पूर्वजन्मनः उदितः प्रत्ययः महाजाग्रद् इत्युच्यते।

४. जाग्रत्स्वप्नः–यथा-आरूढस्य–रुढस्य सर्वथा मनोमयस्य मनसः काल्पनिकी सृष्टिः यस्यामवस्थायां भवति सा जाग्रदवस्थायां भवति, सैव जाग्रत्स्वप्न इति नाम्ना व्यवह्रियते।[३०] ऋग्वेदे जाग्रत्स्वप्नः संकल्पपदेनोक्तः।[३१]

५. स्वप्नो यथा–यस्मिन् काले मनुष्येषु बोधो भवति, यदाऽहं किञ्चिद् दृष्टवान् इदानीं तद् दृष्टिगतं न भवति, इति जाग्रत्काले स्यात् तदेव स्मृतिः स्वप्नपदवाच्यं भवति।

६. स्वप्नजाग्रत्–यथा-चिरं यावत् साक्षात्काराभावाद् यदा ज्ञानं विकसितं नास्ति, चिरं महद्वार्ता च जायते तदा एष स्वप्नः जाग्रत्स्वप्न इति कथ्यते।

७. सुषुप्तिः–यथा-उपर्युक्ताः षड् अवस्थाः परित्यज्य यदा जीवः क्रीडात्मकासु स्थितिषु तिष्ठति सैवावस्था सुषुप्तिरिति उच्यते। तस्यामवस्थायां सर्वमपि जगत् अन्तस्तले लीनं भवति।

उपर्युक्त–विवेचने आसामवस्थानां परस्परं संश्लेष एव विशेषेण विचारणीयो भवति। आसामवस्थानां सीमानिर्देशः सम्भवो नास्ति। बृहदारण्यकोपनिषदि एवमुल्लेखो मिलति यत् स्वप्नेन शरीरं निश्चेष्टीकृत्य

---

२९. बीजं जाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च।
जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत्सुषुप्तिकम्।। (महोपनिषत् अध्याय ५९ लोक-८)

३०. महोपनिषत् अध्याय ५ श्लोक १५ (विद्याभवन ग्रन्थमाला २८)

३१. जाग्रत्स्वप्नः संकल्पः (ऋग्वेद १६४/५)

स्वयं जाग्रत्सन् सर्वं पदार्थं प्रकाशयति। स्वप्नावस्थायाम् इन्द्रियाणि बाह्यजगत: सम्बन्धं विच्छिद्य अन्तर्लीनानि भवन्ति। तदानीं केवलं मनस: अन्तर्लीला चलति निद्रावस्थायां अन्तर्लीलाया: अभाव एव सुषुप्ति: इत्युच्यते। तत्रोपनिषदि ब्राह्यजगत: सम्बन्धविच्छेदेन देहेन्द्रियसंघातपदेनोच्यते, अर्थात् एवं देहेन्द्रियसंघातो लोकमतिक्रम्य भवित तदानीम् आत्मन: विचरणस्थानं लोक: परलोकश्च उभौ भवत:। स्वप्नस्थानं लोक–परलोकयो: सान्ध्यस्थानं भवति। स्वप्नस्थाने स्थितो मनुष्य: लोक-परलोकौ पश्यति। स्वप्नावस्थायां पुरुष: स्वयं ज्योतिस्वरूपो भूत्वा वासनादीन् विकारान् शमयति। तत्रावस्थायां न रक्षस्था अश्वा:, न मार्ग:, तथापि सर्वं संरचयति। एवमेव तत्रावस्थायामानन्दमोदप्रमोदादीनि रचयति। सैव लीला आत्मन: अन्र्लीला इत्युच्यते।

कठोपनिषदि एवमुल्लेखोऽस्ति यद् स्वस्मिन्ननेकविधसृष्टे रचयिता पुरुष: सर्वेषु सुप्तेष्वपि जागर्ति यथा–

**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति।**[३२]

अन्यत्रापि प्रश्नोपनिषदि चतुर्थे प्रश्ने एवमुल्लेखोऽस्ति यद् मानव: जाग्रदवस्थासु श्रुतं, दृष्टम् अनुभूतं वा वस्तु न केवलं पश्यति, परन्तु अन्यदपि किञ्चिदनुभवति। एतेन इदं ज्ञायते यद् स्वप्नसृष्टि: वास्तविकी नास्ति, अपितु कर्मफलं भोजयितुं कर्मगतसंस्कारानुसारं सर्वं दृश्यं दर्शयति।

''सूचकश्च हि श्रुतेराचक्षते च तद्विद:" इति वेदान्तान् अनुसृत्य एव ज्ञायते यद् स्वप्न आगामिन: जीवनस्य शुभाशुभमपि सूचयति। प्रश्नोपनिषदि वर्णितेषु प्रश्नेषु इदं स्पष्टं जायते यत् ''अमैष देव: स्वप्ने महिमानमनुभवति यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुश्रृणोति देशादिगन्तरैश्च प्रत्यनुभूतं पुन: पुन: प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं-चाश्रतुं-चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्व: पश्यति स यदा तेजसाभिभूतो भवत्यत्रैष देव: स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीरे एतत्सुखं भवति।[३३] माण्डूक्योपनिषदि एवं वर्णनं मिलति यत् स्वप्नस्थानं प्राप्तस्य मनुष्यस्य ज्ञानं वर्धते, यथा "स्वप्नस्थानोऽन्त: प्रज्ञ: सप्ताङ्ग एकोनविंशतिमुख: प्रविविक्तभुक् तैजसो द्वितीय: पाद:।[३४] भारतीयचिन्तका एवं चिन्तयन्ति यत् स्वप्नस्य घटना जीवात्मन: स्वतन्त्रा रचना नास्ति, अपि तु निमित्तमात्रं भवति। वास्तविकी स्थिति: एवमस्ति यद् जीव: स्वकर्मानुसारमेव सर्वं लभते। स्वप्नोऽपि कर्मण: फलं, यस्य कर्मण: शुभं वा अशुभं वा फलं यथाकालमागच्छति पूर्वमेव तत्सूचयति अहं आगतमिति। अत्र प्रकरणे शुश्रुतसंहितायाम् अशुभफलस्य विषये एवं स्पष्टरूपेणोल्लेख: प्राप्यते यथा–

३२. कठोपनिषत् द्वितीय अध्याय पृष्ठ-७ श्लोक-४
३३ प्रश्नोषनिषत्–चतुर्थप्रश्न पृष्ठ १२ श्लोक १-१०
३४. माण्डूक्योपनिषत् पृष्ठ-१८ श्लोक ४

**स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्दभैः।**
**वराहैर्महिषैर्वापि यो यायाद्दक्षिणामुखः॥**

**रक्ताम्बरधरा कृष्णा हसन्ती मूक्तमूर्धजा।**
**यं वा कर्षति बद्धवा स्त्री नृत्यन्ती दक्षिणामुखम्[३५]॥**

लोकेऽपि एवं कथयन्ति विज्ञा यत् कश्चिद् आत्मानं मृतं पश्यत तदा चिरकालं यावत् स जीवति, परन्तु अत्र कस्यापि मरणसूचनाऽपि सम्भवति।[३६] परन्तु एवंविधः स्वप्नः स्वस्थेन मनुष्येण दृष्टः तदैव तत्फलमपि सार्थकतां लभते। पापात्मभिः दृष्टः स्वप्नो निष्फलो भवति। एवं निष्कर्षरूपेण एतदागतं यत् सर्वे ग्रन्था ग्रन्थकाराश्च स्वमनीषया स्वप्नविषयकं विचारं विहितवन्तः।

ज्योतिषशास्त्रीयग्रन्थेषु प्रमुखतया वृहत्संहितायाम्, अद्भुतसागरे, सामुद्रिकशास्त्रे स्वप्नचिन्तामणौ च बृहती चर्चा प्राप्यते। एवं वक्तुं शक्यते यद् अद्यापि स्वप्नस्य सम्बन्धो ज्योतिषशास्त्रे दृश्यते, यस्य फलं अस्माभिः प्राप्यते। स्वप्नस्य मीमांसा कालानुसारेण पृथक्-पृथग्भवति। एवञ्च मानवजीवनदर्शनेऽद्यापि स्वप्नस्य मीमांसा प्रासंगिकी वर्तते।

---

३५. स्वप्नविवेकः-पृष्ठ ४६ श्लोक-१२ (सुश्रुतसंहिता) चौखम्भा संस्कृत सीरीज, वाराणसी।
३६. स्वप्नविवेकः पृष्ठ ३८ श्लोक २-३ (ब्रह्मवैवर्तपुराण) चौखम्भा संस्कृत सीरीज, वाराणसी।

# योगदर्शनस्य दर्शनान्तरेभ्यो वैशिष्ट्यम्

डॉ. रविशङ्करशुक्लः

**योगदर्शने सृष्टिक्रमः–**

योगदर्शनं किल चित्तरूपान्तःकरणस्य मनोबुद्धिरहङ्कारश्चेति विभागत्रयमङ्गीकुरुते। पञ्चभूतानां-गुणाः किल तन्मात्रशब्देनोच्यन्ते। अर्थात् आकाशस्य शब्दः, वायोः स्पर्शः तेजसो रूपम्, जलस्य रसः, पृथिव्या गन्धश्च। इमे पञ्चगुणा एव पञ्चतन्मात्राः प्रोक्ताः। तन्मात्रासाहाय्येन सर्गो विस्तृतिमवाप। शब्द-स्पर्श-रूप-रस-गन्धेभ्यः क्रमशः श्रोत्र-त्वक्-चक्षु-रस-जिह्वानामधेयानि पञ्च ज्ञानेन्द्रियाणि समाविर्भूतानि। एतानि ज्ञानेन्द्रियाणि तन्मात्रा सत्त्वांशतः समुत्पद्यन्तेति विज्ञेयम्। एतत्तत्त्वानां रजोगुणांशतः पञ्च कर्मेन्द्रियाणां समुत्पत्तिः। अर्थात् आकाशस्य रजोंऽशतो वाक्, वायुरजोंऽशतः पाणी, तेजोरजोंऽशात् पादौ, जलस्य रजोंऽशादुपस्थः, पृथिव्या रजसः अंशेन पायुरिति। एतत्पञ्चभूतविस्तृत्या समस्तसर्गोत्पत्तिः। अयं सर्गक्रमः योगदर्शनस्य दर्शनान्तरेभ्यो विशिष्टः। तेनास्य योगदर्शनस्य वैशिष्ट्यम् प्रतिभाति।

**कर्मवादः**

मानवजीवने कर्मैवितारकं प्रत्यूहवारकं, कर्मफलस्यानिवार्यत्वं कृतं क्रियमाणं करिष्यमाणञ्च कर्मफलभाग् भवति। कृतकर्मणा विपाकरूपेण विविधियोनिषु उच्चावचकुलादिषु च जन्म भवति। जन्मना फलप्राप्तिर्भवति ''**अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्**''[1] इति भारतीयदर्शनानां सिद्धान्तः। ''**जातस्य हि ध्रुवोमृत्युः ध्रुवं जन्म मृतस्य च**''[2]।

**योगस्थः कुरु कर्माणि सङ्ग व्यक्त्वा धनञ्जय।**
**सिद्ध-सिद्धयोः समो भूत्वा समत्वं योग उच्यते॥**[3]

कर्त्तव्यभावनयाऽनायासेन यत् कर्म क्रियते तत् कर्म कौशलमिति अभ्युपपद्यते। एतदेव परमो योग इत्युच्यते। कर्मयोगमनास्थाय जीवननिर्वाहोऽपि दुष्करः।

मनुष्येण सदा अनासक्तिभावनया कर्मकार्यमिति। कृतस्य कर्मणः फलावाप्तिः सुनिश्चिताः।

---

१. ब्रह्मवैवतर्तपुराण, अ. २८, श्लोक ८
२. गी. अ. २ श्लोक. २७
३. गी. अ. २ श्लोक. ४८

सत्कर्मणा पुण्यं दुष्कर्मणा च पापं प्राप्नोति। ''पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनैव मानवः[४] कर्मानुसारं शुभं वाऽशुभं वा जन्म लभते। सुकृतं क्रियते चेत् सत्फलं लभ्यते, दुष्कृतं क्रियते चेत् दुष्फलं प्राप्यते। सर्वास्ववस्थासु कर्मणां फलमवश्यमवाप्यते। अतस्तादृशं कर्म कार्यं यथाजीवने दुःखावाप्तिर्न स्यात्। योगदर्शने विशिष्टः सम्बन्धो विद्यते कर्मवादस्य।

**पुनर्जन्मवादः**

कर्मानुरूपं सर्वस्यापि जन्तोः पुर्नजन्म भवति मृतस्य च कर्मानुसारं पुनर्जन्म सुनिश्चितम्। यः पूर्वजन्मनि यादृशं कर्म कुरूते, सोऽस्मिन् जन्मनि तादृशे एव कुले परिवारे च जन्म लभते। अयं पुनर्जन्मवादसिद्धान्तः योगः दर्शनेन साकम् विशिष्टः सम्बन्धः स्थापयति।

**कैवल्यम्**

मोक्षावाप्तिः परमः पुरुषार्थः। मोक्षमधिगम्य न च **"न स पुनरावर्तते न स पुनरावर्तते"** इति श्रुतेः[५] ऋषीणां पुनरावर्तनं न भवति। ज्ञानाग्निः सर्वकर्मप्रदाहे मोक्षावाप्ति र्भवतीति परमपुरुषार्थः। योगदर्शने परमलक्ष्यं प्राप्य मुक्तिं विन्दति मानवः। ज्ञानभक्तिमार्गौ द्वावप्यस्तः परमश्रेयसे। योगदर्शनस्य सांख्यदर्शनविज्ञानेन साकं धनिष्ठसम्बन्धः। योगदर्शनविज्ञानं वैदिककर्मकाण्डत्रयप्रतिपादकमीमांसाशास्त्रस्य परमं सहायकं? यौगिकक्रियाकलापस्य मौलिक आचारश्च। एतेन सर्वविधोपासना परिपाटीषु विशिष्टं साहाय्यं लभ्यते।

अन्यदर्शनापेक्षया योगदर्शनस्येदमप्येकं वैशिष्ट्यं यदत्र दृष्टजन्यं वेदनीयम्, अदृष्टजन्मवेदनीयमिति द्विविधमेव कर्म समाम्नातम्, येन पुरुषार्थवादीनां कृतेऽस्य परमोपकारिता। एतद्दर्शनमतमनुसृत्य स्वीयपुरुषार्थप्रभावतो योगी सर्वमपि विधेयं सुविधातुमर्हति। अन्यदर्शनेषु मुमुक्षवः साधकाः शनैः शनैः स्वाधिकारानुरूपे समुन्नतिमार्गेऽग्रे सरति। परन्तु योगदर्शनमेतत् स्वकीयालौकिकयोगशक्तिद्वारा सर्वेभ्यः सर्वविधमधिकारं प्रयच्छति।

अस्य योगदर्शनस्य अन्यदर्शनेभ्यो वैशिष्ट्यमवश्यं ज्ञेयम्। योगदर्शने चित्तं वाऽन्तःकरणं वा यमनियमादिभिः ईश्वरप्रणिधानादिभिः ध्यानाय साधारणोपायैर्वानिरूद्य पुरुषः प्रकृतिबन्धनान्मुक्तः स्वस्वरूपं प्राप्नोति। अयमेव दर्शनस्यास्य चरमोराद्धान्तः।

**नास्ति सांख्य समं ज्ञानम्, नास्ति योग समं बलम्।[६]**
**अत्रवः संशयो माभूज्ज्ञानम् सांख्यं परं मतम्।।**

---

४. बृहदारण्यकश्रुतिः अ. ३, ब्राह्मण ३
५. महा० भा० शा० प०, ३१६-२४
६. महा० भा० शा० प०३०११०९-१०

ज्ञानं महद् यद्धि महत्सु राजन् वेदेषु सांख्येषु तथैव योगे।
यच्चापि दृष्टं विविधं पुराणे, सांख्यागतं तन्निखिलं नरेन्द्र।।[७]

यच्चेतिहासे षुमहत्सु दृष्टं यच्चार्थशास्त्रे, नृपशिष्टजुष्टे।
ज्ञानञ्च लोके यदिहास्ति किञ्चित् सांख्यागतं तच्च महन महात्मन्।।[८]

तेषां न तिर्यग्गमनं हि दृष्टं नाऽर्वागतिः पापकृताधिवासः।
न वा प्रधाना अपिते द्विजातयो ये ज्ञानमेतन्नृपतेनुरक्ता।।[९]

महाभारतस्य एभिः श्लोकै सांख्यशास्त्रस्य कियन्महत्वं वर्तते। एतावत् महत्वमन्येषां केषामपि शास्त्राणां नास्ति यथा सांख्ययोगशास्त्रस्य।

जगति संसारिणां जनानामभ्युदयाय भवतापविनाशाय कैवल्यप्राप्तये सांख्ययोगदर्शनमार्गमतिरिच्य न कोऽपि अपरो मार्गः। विमृश्यतां योगशास्त्ररसिकैः किं एतावन्महत्वमस्ति? कस्याप्यन्यस्य दर्शनस्य गर्भस्थडिम्भो भगवन्तं स्तौति **यदि योऽन्या प्रमुञ्चेयं सांख्ययोगं समाश्रये।** इत्युक्तं श्रुत्या अतोक्तम्–

**भवतापेन तप्तानां योगो हि परमौषधम्।।**

---

७. महा० भा० शा० प०, अ. ३०१ श्लोक १११

८. महा० भा० शा० प०, अ. ३०१ श्लोक ११३

९. हठयोगप्रदीपिका, उप.४, सं. टीका

# भिन्नागमदर्शनेषु कालस्वरूपम्

श्रीसच्चिदानन्दमिश्रः

यः सृज्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या
पुंसोऽभ्रमाय दिवि धावति भूतभेदः।
कालाख्यया गुणमयं क्रतुभिर्वितन्वं-
स्तस्मै बलिं हरत वत्सरपञ्चकाय॥[१]

इति पद्यवर्णितमहिमकालस्य भगवतो प्रत्यक्ष एव प्रभावः, यत् सर्वोऽपि संसारः नैजेन स्वभावेन यथायथं सञ्चालयति। वर्षः, अयनम्, ऋतवः, मासाः, पक्षः, अहोरात्रम्, होरा क्षणादिभेदेषु विभक्तोऽपि परमार्थत एक एव, स च कालः कः इति प्रश्नस्यावधारणे इत्थमेवेतिसिद्धान्तावधारणं साहसमेव। श्रीमद्भागवतेऽपि परमनीतिविदा विदुरेणोक्तम् यत्-

भगवान् वेद कालस्य गतिं भगवतो ननु।
विश्वं विचक्षते धीराः योगराद्धेन चक्षुषा॥[२]

अर्थात् कालस्य सत्यस्वरूपं भगवानेव वेद, न कोऽपि मनुष्यः भगवतो कालस्य महिमानं वर्णयितुं समर्थ इति तथाऽपि मनीषिणः योगराद्धेन चक्षुषा कालस्य विश्वरूपत्वमेवाहुः। तेन विश्वमेव काल इति पर्यवसितं भवति।

तथाऽपि अनेके आचार्याः स्वस्वधिषणानुसारं कालस्वरूपत्वावधारणम् उपक्रमन्ते। ते च ज्योतिर्विदः, वैयाकरणाः, सांख्यन्यायमीमांसाविदश्च आचार्याः। अत्रापि वर्गभेदः आचार्याणाम्। अतोऽहमत्र आप्ताचार्याणां शरणीभूय यथामति यथायथं प्रयते इति। तत्र प्रथमतः वेदेषु कालस्वरूपं किमिति विचार्यते-

त्रिनाभिचक्रमजरमनर्वं यत्रेमा विश्वाः भूवानधितस्थुः।
पञ्चपादं पितरं द्वादशाकृतिं दिवः आहुः परे अर्द्धे पुरीषिणम्॥[३]

---

१ श्रीमद्भागवतम् ३/११/१५

२ तत्रैव ३/११/१७

३ ऋक्संहिता २/३१/६

कालमहिमप्रधानतन्त्रे कालार्थ पितरम् इति पदमुपात्तम्। तत्पदमुपादाय दुर्गाचार्यमहाशयैः निरुक्तटीकायां पितरम् = पालकं सर्वभूतानामुत्पादयितारम् इति रूपेण निर्वचनं कृतम्। तेन विश्वोत्पत्तिस्थितिसंहारनियामकत्वं कालत्वमिति लक्षणमाविर्भूतम्। ''काल एव ससर्ज भूतानि'' इत्याद्याप्तोक्तमपि संगच्छतेऽत्र। अथर्ववेदोऽपि-

**कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः।**
**तमारोहन्ति कवयो विपश्चितस्य। चक्रा भुवनानि विश्वाः।**

**'सप्त चक्रान् वहति काल एष सप्तास्य नामीरमृतमन्वक्षः।**
**स इमा विश्वा भुवनान्यञ्जत् कालः स ईयते प्रथमो नु देवः'।।**[४]

अत्र सर्वत्रापि निर्वचनकारः सायणः तत्र ''कालः परमात्मस्वरूपेण प्रतिपादितः'' इत्याचष्टे। अन्ते च कालः परमेश्वररूप एव नातिरिक्तः, इत्येव अथर्ववेदीयं मतं पर्यवस्यति। सूक्तस्य प्रतिपाद्यमुपपादयन् 'अनेन सूक्तद्वयेन' सर्वजगत्कारणभूतः कालरूपः परमात्मा स्तूयते इत्यपि तेनैव सायणमहाभागेन (१९.६.८१) इत्यत्र ससुखमभणि। एवम्प्रकारेण वेदद्वयस्थमतमाधारीकृत्य निर्भ्रान्तमेतद् प्रतिज्ञातुं शक्यते यत् परमेश्वर एव कालः, स एव विश्वोत्पत्तिस्थितिसंहारादीनां नियामकः। अतोऽग्रे कालाख्यं तत्वमुपनिषदामनुरोधेन अवधारयामः'।

मुण्डकोपनिषदि कालाख्यं तत्वमन्यथा एव निर्णीतम्। तत्र काल उत्पद्यते। अन्येषां पदार्थानां यथा ब्रह्म कारणम्भवति, तथैव कालस्यापि कारणं ब्रह्म एव। उक्तञ्च तत्र-

**तस्माद् ऋचः सामयजूंषि दीक्षायज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।**
**सम्वत्सरश्च यजमानश्च लोकाः, सोमो यत्र पवते यत्र सूर्यः।**[५]

अत्र मन्त्रे ''सम्वत्सरः कालः कर्माङ्गम्'' इति भगवत्पादोक्तव्याख्यानुरोधेन संवत्सरः कालस्याप्युपलक्षणम्। तेन स्पष्टमेव आयातम् यत् कालो जन्य इति। बृहदारण्यकेऽपि 'एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासाः क्रतवः सम्वत्सराः इति विधृतास्तिष्ठन्ति'।[६]

अस्य मन्त्रस्य विवेचनावसरे माधवाचार्यैः व्याख्यातं यत् अनया श्रुत्या कालस्य परमेश्वराधीनता प्रतिपादिता'। शिवमाहात्म्यखण्डेऽपि कालस्य शिवायत्तता तैरेव प्रतिपादिता। शुक्राचार्यमतेऽपि कालस्योत्पत्तिमत्त्वे विनाशित्वम्। अत एव अनित्यत्वम् अस्वतन्त्रत्वमपि। भगवत एव कालनियामकत्वमिति मतजालं सिद्धयति।

---

४ अथर्ववेद १/६/१-२

५ मुण्डकोपनिषद् २/१/६

६ बृहदारण्यकोपनिषद् ३/८/९

स एव संयुनक्ति भूतानि स एव वियुनक्ति च, सोऽपि परमेश्वराधीन इत्यादिवाक्यैः कुत्रचित् कालस्य परमेश्वराधीनत्वं प्रतिपादितम्। अतोऽग्रे-वेदाङ्गेषु कालस्य स्वरूपं किम् इत्यत्रधारयितुं वर्त्तामहे।

ज्योतिःशास्त्रमतानुसारं तु कालः प्रजापितिरिति मन्यते। स एव प्रजापतिः प्रजानामुत्पत्तिस्थिति-संहारादीनां हेतुः। तस्यैव कालरूपस्य प्रजापतेरङ्गानि दिनमासादीनि। ग्रहतारादिपरिस्पन्दरूपत्वमपि कालस्यैव परिकीर्तितम्। उक्तञ्च तैः-

**आदित्यग्रहतारादिपरिस्पन्दमथापरि।**
**भिन्नमावृत्तिभेदेन कालं कालविदो विदुः॥**[७]

अन्यच्च-''न देवदत्तादि-परिस्पन्दनिबन्धनाः क्रमाक्रमादिप्रत्ययाः सूत्रे किन्तु ग्रहनक्षत्रादिपरिस्पन्दनिबन्धनाः स एव ग्रहतारादिपरिस्पन्दः कालः' इति।

इदानीं पतञ्जलिराद्धान्तानुसारं कालस्वरूपम् अवधार्यते। असौ पतञ्जलिः महान् वैयाकरणः 'यथोत्तरं मुनीनां प्रामाण्यमि'ति समुद्घोषेण समस्ते व्याकरणनिकायेऽस्यैव सर्वातिशायि प्रामाण्यमवधार्यते। न च पाणिनिः कात्यायनश्च कथमुपेक्ष्येते इति वाच्यम् ताभ्यां कुत्रचिदपि कालो न परिभाषित इति। तस्मात् क्रमप्राप्तस्य अस्यैव विवेचनम् उपक्रान्तम्।' ''कालाः परिमाणिना'' इति सूत्रे काललक्षणम्-

'येन मूर्तीनामुपचया अपचयाश्च लक्ष्यन्ते तं कालमाहुः' इति रूपेण परिकीर्तितम्। स च एक एव इति सूचितम्भवति, येनमित्यत्र कालमित्यत्र च एकवचनेन कालस्य सर्वथा ऐक्यमेव प्रतिपाद्यते।

आशङ्कितञ्च कैयटेन 'यद्येवं तस्यैकत्वं कथमहरादिविभाग इत्यत आह-समाधिस्तु भाष्यकृतैव साधितः। तस्यैव कयाचिद् क्रियायुक्तस्य अह इति भवति रात्रिश्च भवति। वस्तुतः काल एक एव। आदित्यगतिस्तत्र आरोप्यते। उक्तञ्च तत्र कया क्रियया-आदित्यगत्या, तयैव असकृदावृत्या मासः इति भवति संवत्सर इति च। एतेन स्पष्टम्भवति यत् सूर्यक्रियायाः कालोपाधित्वम्, तेन लक्षणञ्चायातं यत् पदार्थानां भावभेदहेतुत्वमित्यादि। अस्मिन्नेवोपक्रमे आचार्यभर्तृहरिमतमाश्रित्य कालाख्यं तत्वमुपवर्ण्यते। मतेऽस्मिन् श्रीहरिणा श्रीपतञ्जलिनावधारितमतस्यैव विवेचनं प्रकामं कृतम्। इह सन्दर्भार्थम् -

**मूर्तीनां येन भिन्नानामाचयापचयाः पृथक्।**
**लक्ष्यन्ते परिणामेन सर्वासां भेदयोगिना॥**[८]
**उत्पत्तौ च स्थितौ चापि विनाशे चापि तद्वताम्।**
**निमित्तं कालमेवाहुर्विभक्तेनात्मना स्थितम्॥**[९]

---

७ न्यायमञ्जरी १/१/५

८ वाक्यपदीयम् ३/६/१३

९ तत्रैव ३/६/३

**तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते।**
**प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते।।[१०]**
**यदि न प्रतिबध्नीयात् प्रतिबद्धश्च नोत्सृजेत्।**
**अवस्था व्यतिकीर्येरन् पौर्वापर्य विना कृताः।।[११]**
**तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः।**
**न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते।।[१२]**
**नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः।**
**द्रव्यात्मा स तु संसर्गात् एवं रूपः प्रकाशते।।[१३]**

एतेन स्पष्टमायातम्भवति यद् भावभेदहेतुत्वं कालस्य, द्रव्यात्मा इत्यनेन द्रव्यत्वञ्चेति।

'अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः' इति कथनेन ब्रह्मणः कालशक्तेरेकतत्वम्, अन्यच्च 'एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्' इति वचनात् आदित्यक्रियाकृतम् अनेकत्वं सिद्धयति। यद्यपि हरिमतस्य अनेकाः व्याख्याः वर्तन्ते परमिह विस्तरभयान्नोपस्थाप्यन्ते।

भारतीयदर्शनेषु विभिन्नानि मतानि सन्ति। एकत्र कालस्यैकत्वं साधितमपरत्र क्षणिकत्वञ्च साध्यते-तस्योद्कालस्वरूपविवेचनोपक्रमे तेऽपि न हेया इति हेतोः सर्वप्रथमं सांख्यमतम् अवधार्यते। सांख्यो द्विविधः-सेश्वरः निरीश्वरश्च। सेश्वरसांख्यमते श्रीविज्ञानभिक्षुणा योगवार्त्तिके 'क्षणतत्क्रमसंयमाद् विवेकजं ज्ञानमिति'[१४] व्यासभाष्यव्याख्यानावसरे समाकूतम्। अन्यदपि इदानीं क्षणातिरिक्तः कालः नास्ति मुहूर्तादिरूपः महाकालपर्यन्त इति। मुहूर्ताहोरात्रादयः बुद्धिकल्पितसमाहारा एव। कालस्य वस्तुशून्यत्वमपि एतैः प्रतिपादितम्। स खलु अयं कालो वस्तुशून्यो बुद्धिनिर्मितः शब्दज्ञानानुपाती लौकिकानां व्युत्पत्तिदर्शनानां वस्तुस्वरूप इवाऽवभासते। कालस्य नित्यत्वमपि प्रतिपादितं परं सा नित्यता प्रवाहरूपा उक्तञ्च तैः-

**'कालनित्यत्व-श्रुतिस्मृतयश्च प्रवाहरूपकालपराः'** इत्यादि।[१५]

एतेन स्पष्टमेव आयातं यद् सांख्यमते कालः वाह्यवस्तुशून्यः बौद्धः क्षणिकः अनित्यश्च, स्मृतिश्रुतिवाक्यप्रतिपादिता नित्यता तु प्रवाहरूपा, तस्मात् श्रुतिविरोधोऽपि परिहृतः इत्यादि-अतोऽग्रे निरीश्वरसांख्यमतमवधार्यते। एकत्र तु कालस्य गुणक्षोभकत्वं प्रतिपादितम्, 'कालो गुणक्षोभकः' इति

१० तत्रैव ३/६/४
११ वाक्यपदीयम् ३/६/५
१२ तत्रैव ३/६/६
१३ तत्रैव ३/६/७
१४ पातञ्जलदर्शनम् (योगदर्शनम्) ३.५२
१५ योगवार्तिकम् ३.५२

वृत्तान्तव्याख्यावचनात्। निरीश्वरसांख्यमते तु कालतत्त्वस्य समुल्लेखः क्वचिदपि नास्ति। पञ्चविंशतितत्वाङ्गीकारस्तु कालस्य विप्रतिपन्नमेव साधयति। अत एव भगवत्पादाचार्यश्रीमच्छङ्करैः शारीरकभाष्यटीकायां रचनानुपपत्त्यधिकरणे प्रथमसूत्रान्ते कालपदार्थानङ्गीकार एव प्रतिपादितः। 'सांख्यैः कालस्यानङ्गीकारात्' इति वाक्यञ्च तेषाम्।

वाचस्पतिमिश्रैरपि कालस्य अभाव एव साध्यते। उक्तञ्च तैः-'कालश्च वैशेषिकाभिमत एको नाऽनागतादिव्यवहारभेदं प्रवर्तयितुमर्हति। तस्मादयं यैः उपाधिभेदैः अनागतादिव्यवहारभेदं प्रतिपद्यते, सन्तु त एवोपाधयोऽनागतादिव्यवहारहेतवः, कृतमन्तर्गहुना कालेनेति सांख्याचार्याः तस्माद् न कालरूपतत्त्वान्तराभ्युपगमः' इति।[१६] परं सांख्यमतस्य आपरिशीलनेन इदं दृढं प्रतिज्ञातुं शक्यते यत् अन्यान्यपि कालस्य साधकवाक्यानि सांख्यसाहित्यनिचये समुपलभ्यन्ते। तानि च-

**परिणामः पृथग्भावो व्यवस्थाक्रमतः सदा।**
**भूतैष्यद्वर्तमानात्मा कालरूपो विभाव्यते॥**[१७]

अत एव प्रकृतिपरिणतिः कालः इत्यादिरूपाणि।

श्रीमाधवाचार्यैरपि पाराशरसंहिताभाष्ये प्रधानवादे पञ्चविंशतितत्त्वेभ्यो बहिर्भूतस्य कालतत्त्वस्य अभावात् 'प्रधानमेव कालशब्देन व्यवह्रियताम्' इत्यभिहितम्। सांख्यकारिकायाः युक्तिदीपिकाव्याख्यायाः सिद्धान्तेन तु कालः क्रियारूप एव, अन्यः कश्चित् स्वतन्त्रः पदार्थः नास्ति।

**'न कालो नाम कश्चिद् पदार्थ अस्ति किं तर्हि, क्रियासु कालसञ्ज्ञा'** इति।

एकत्र कालो न्यक्क्रियते अन्यत्र तु नित्यः विभुः इत्यादिरूपेण आदरेणावलोक्यते, क्रियाकृतभेदमारोप्य अनेकत्वञ्च आरोप्यते-तस्माद् तदपि मतं निरतिशयेन विमर्शनीयमिति हेतुना वैशेषिकमतं विविच्यते। वैशेषिकमतम् अधिकालम् अस्मिन् मते कालः द्रव्यम् विभुः नित्यः इत्यादि। उक्तञ्च न्यायकन्दल्याम्-

''काललिङ्गानां परापरादिप्रत्ययानामविशेषात् भेदाप्रतिपादकत्वात् अञ्जसा मुख्यया वृत्या कालस्य एकत्वे सिद्धेऽपि नानात्वोपचारात् नानात्वमिति''।

अयञ्च कालः न प्रत्यक्षः स चानुमेय एव, किरणावल्यामुदयनाचार्येण प्रतिपादितञ्चैतत् सर्वम्। 'स्थविरादौ परत्वम् तपनपरिस्पन्दि प्रकर्षबुद्धिजन्यम् तदनुविधायित्वात् पटकुविन्दवत्' इति रूपेण अनुमानाकारश्चापि प्रदर्शितः। तस्य गुणाः संख्या-परिमाणपृथक्त्वसंयोगविभागाः इति प्रशस्तपादभाष्यरीत्या 'सर्वोत्पत्तिनिमित्तं जगदाधारश्च कालः' इति काणादसिद्धान्तचन्द्रिकानुसारमपि

---

१६ सांख्यतत्त्वकौमुदी कारिका ३३

१७ श्रीमृगेन्द्रवृत्तिदीपिका १० प्रकरण ४ कारिका

काल अनुमेय एव भवति।

अस्मिन्नुपक्रमे नैयायिका अपि स्पर्धन्ते। अत्र मतेऽपि एते च वैशेषिके प्रसिद्धाः नैयायिकानामप्यविरुद्धाः[१८] इति सूत्रस्थभाष्योद्घोषेण वैशेषिकमतवदेव कालसिद्धान्त अनुमन्तव्यः। जयन्तभट्टेनोक्तमपि-

**दृष्टः परापरत्वस्य दिक्कृतस्य विपर्ययः।**
**युवस्थविरयोः सोऽपि विना कालं न सिध्यति॥**

अन्यदपि

**समानतन्त्रे दिक्कालौ वैतत्येन विचिन्तितौ।**
**तन्नेह लिख्यते लोके द्वेष्या हि बहुभाषिणः॥[१९]**

तेन स्थविरं स्पष्टं जातं यतः वैशेषिकवत् गतिश्चात्र।

अभिनवनैयायिकाः दीधितिकारास्तु किमपि कालसम्बन्धिमतम् अन्यदेव प्रस्तुवन्ति। उक्तञ्च तैः--

'अतिरिक्तकालवादिभिः कालोपाधित्वेन स्वीकृतैरेव, उपाधिरवच्छिन्नः परमेश्वरः कालव्यवहारविषयः, न तु परमेश्वरातिरिक्तः कालोऽङ्गीकर्तव्यः। इत्यादि। अन्यदपि तेषामाकूतं बहु वर्तते तथापि विस्तरभयात् नोपनिबध्यत इह। प्रसङ्गप्राप्तं मीमांसकमतानुसारं कालविवेचनोपक्रमे तेषु अन्यतमः भाट्टः कालं कथं प्रतिपादयति इति हेतोः तदीयां कारिकामुपन्यसामि।

**परिमाणगुणाधारं द्रव्यं द्रव्यविदो विदुः।**
**पृथ्वी सलिलं तेजः पवमानस्तमस्तथा॥**
**व्योमकालदिगात्मानो मनः शब्द इति क्रमाद्।**
**एकादशविधञ्चैतद् कुमारिलमते मतम्॥[२०]**

भाट्टचिन्तामणावपि, द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्मनोऽन्धकारशब्द- रूपाण्येकादश इति प्रत्यक्षसूत्रे[२१] उक्तं वर्तते। अत अत्र मतेऽपि कालः विभुः नित्य इत्यादिरूपेण स्वीक्रियते। काष्ठा मुहूर्तादिभिः तस्य भेदाः उपचिताः। अत्राऽयं विशेषः यदयं कालः षडिन्द्रियग्राह्यः इत्यादि। उक्तञ्च तैः -

---

१८ वात्स्यायनभाष्य, १.१.९

१९ न्यायमञ्जरी २/५

२० मानमेयोदय-प्रमेय परिच्छेद, ६-७

२१ भाट्टचिन्तामणि, १.१.४

'कालो न स्वतन्त्रेण गृह्यते, अथ विषयेषु स्वेषु गृह्यमाणेषु तद्विशेषणतया सर्वैरपि इन्द्रियैः गृह्यते। तस्मात् कालः प्रत्यक्षः विभुः नित्यः इत्यादिसिद्धान्तः पर्यवस्यति। प्रभाकरस्तु कालः द्रव्यं विभुः उपाधिभेदेन च क्षणादिव्यवहारहेतुः इत्येव सिद्धान्तं स्थापितवान्। सम्भूयेदं वक्तुं शक्यते यत् वैशेषिकवदेव अस्य कालिको सिद्धान्तः। उक्तञ्च तेनैव तत्र चाभ्युपगमसिद्धान्तन्यायेन काणादतन्त्रसिद्ध एव प्रमेयवर्गः अङ्गीक्रियते, तस्य प्रतिपादनार्थं प्रवृत्तत्वात्। न तु पृथगत्र व्युत्पाद्यते तत्र नाभिमतांशो निराक्रियते विशेषांस्तु व्युत्पाद्यते इत्युपक्रम्य तत्र द्रव्याणि 'पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव' इत्यादि तेन कालो द्रव्यमिति सिद्ध्यति।

शाक्तास्तु-'शतवर्षादिरूपाऽऽयुषा परिच्छेदः कालः' इति मन्वते। इदमस्ति तत्वं यद् चितिप्राधान्यमनुभूय यदा जडशक्तिः स्वप्राधान्यमवसादयति, तदा मायातत्त्वमित्युच्यते। सेयं माया विभेदबुद्धिरूपा। एवमस्ति सृष्टिप्रवाहः, मायातः कला-विद्या, रागः, कालः, नियतिः पञ्चतत्त्वानि उत्पद्यन्ते। अतः कालो मायायाः परिणामविशेषः। देशवत् कालस्यापि भावनावशेनैव अल्पमहत्त्वप्रतिभासः अवगन्तव्यः। उक्तञ्च त्रिपुरारहस्ये -

**'देशः कालोऽथवा किञ्चिद् यथा येन विभावितम्।**
**तथा तत् तत्र भासेत दीर्घसूक्ष्मत्वभेदतः।।**[२२]

तस्मात् मायायाः भेदविशेषः काल इति। अन्यत्र शाक्तेषु तु कालतत्त्वं जीवतत्त्वे एव अन्तर्भवतिः। उक्तञ्च तत्र यत् 'विद्याशक्तौ माया-विद्या-कालरागनियतिसहितस्य जीवस्य प्रवेश इति।[२३]

शैवमते तु कालः पार्थक्येन नोपवर्णितः, पुराणेषु या गतिः कालस्य सैवात्रापि निरूपिता वर्तते। अत्र रहस्यमिदं यत् मायाविद्याभ्यामन्या सर्वाधिष्ठानसामर्थ्यरूपा शक्तिस्तया समुपेतः लीलाविग्रहधारी परमेश्वरः शिवाभिधेयः। एतस्य परमेश्वरस्य द्वौ अवस्थाविशेषौ शान्तातीतौ, अत्रैव अतीतपक्षे काल उपचर्यते-अतः सर्वाधिष्ठानसामर्थ्यरूपा शक्तिरेव कालः। अत्र मते 'जन्यानां जनकः कालः जगतामाश्रयो मतः' इत्यादिवाक्यमपि सङ्गच्छते।

एवं प्रकारेण कालेषु अधिगताः सर्वा अपि समुद्भावनाः निबन्धेऽत्र प्रकल्पिताः। मन्येऽहं गवेषकाणाम् कालतत्त्वबुभुत्सूनाञ्च प्रकामं वस्तु इहाधिष्ठापितम् इति। मामकीयं यथासामर्थ्यं नोपेक्षणीयम् इति हेतोः सुधीनां सद्धियां मुदे प्रकल्पितञ्चैतत् इत्यलम्।

---

२२ त्रिपुरारहस्य १४/८३

२३ शिवार्कमणिदीपिका २/२/३८

# काव्यालङ्कारकारिकाख्ये ग्रन्थे प्रतिभाविमर्शः

कमलेश रानी

'सनातनः' इत्युपाधिना समलङ्कृतः आचार्यरेवाप्रसादद्विवेदी महाभागः काशीस्थहिन्दूविश्वविद्यालस्य प्राप्तावकाश आचार्योऽस्ति। सः अस्मिन्नेव विश्वविद्यालये कलासङ्कायस्य अन्तर्गते साहित्यविभागे विभागाध्यक्षः आसीत्। इदानीमपि आचार्यः काशीहिन्दूविश्वविद्यालस्य साहित्यविभागे सम्मानिताचार्यरूपेण संस्कृत-साहित्यं पाठयति। प्रो० द्विवेदी अद्भुतप्रतिभासम्पन्न आचार्यः अस्ति। इदानीं पर्यन्तं प्रो० द्विवेदीमहोदयस्य ग्रन्थस्य सङ्ख्या शताधिका वर्तते। दृश्य-श्रव्यकाव्यविधायां प्रो० द्विवेदी ग्रन्थान् रचयामास।

काव्यालकाङ्कारकारिका प्रो० द्विवेदिमहोदस्य आधुनिककाव्यशास्त्रीयः ग्रन्थोऽस्ति। ग्रन्थोऽयं वाराणसीस्थचौखम्बासुरभारती संस्थानेन १९७७ तमे खिताब्दे प्रकाशितः जातः। अस्य ग्रन्थस्य संस्करणानि जायन्ते चतुरशीत्यधिकचतुश्शतानि मूलकारिकाः पञ्चसप्ततिमिताश्च सङ्ग्रहकारिका उपस्कारकारिकाश्च सन्ति। अत्र कारिकाणां आंग्लभाषायां अनुवादैस्साकं संस्कृतविवृतिमपि आचार्यः कृतवान्। अस्य ग्रन्थस्य द्वितीयः संस्करणः हिन्दी अनुवादैस्सह २००१ तमे वर्षे कालिदासेसंस्थानेन प्रकाशिताः। ग्रन्थेऽस्मिन् द्विवेदिना काव्यशास्त्रस्य प्रथमाचार्यभामहस्य मतमनुसृत्य अलङ्कारस्य काव्यात्मत्वं प्रतिपादितम्। प्रो० द्विवेदी कविः, गम्भीरसमीक्षकः, भाष्यकारः, सम्पादकः, सर्वतन्त्रस्वतन्त्रशास्त्रकारः अस्ति। अतो ग्रन्थेऽस्मिन् प्रो० द्विवेदी काव्यतत्त्वचिन्तनं बहु विमर्शितवान्। अलङ्कारस्य काव्यात्मत्वं स्थापयन् प्रो० द्विवेदी ग्रन्थेऽस्मिन् समस्तकाव्यतत्त्वानां सन्दर्भेऽपि स्वनूतनं मतं उपस्थापयन् प्राचीनाचार्यैः निरूपितम् असमीचीनमतं प्रत्याख्यातवान्। काव्यलक्षणे युगानुरूपं नूतनं चिन्तनं उद्घाटयतः प्रो० द्विवेदीकाव्यस्य सौन्दर्यमप्रतिहतम्। प्रतिभा काव्यस्य कारणं भवतिति मतं निरूपयम् तस्य द्वैविध्यमपि प्रत्यपादयत्।

प्रतिभा काव्यस्य कारणं भवति इति अनेनाचार्येण अवधारितम्। सर्वैः प्राचीनार्वाचीनाऽऽचार्यैः एकमतेन प्रतिपादितं यत् प्रतिभा काव्यस्य कारणम्। इदानीं प्रथमतः प्राचीनैः आचार्यैः मतं प्रस्तुतीकुर्वन् अनन्तरं कविवरद्विवेदिमहोदयस्य मतविमर्शनं प्रस्तूयते।

काव्यरचनायां कानि-कानि कारणानि भवन्ति, विषयेऽस्मिन् काव्यशास्त्रिणः गहनचिन्तनं कृतवन्तः। अनन्तरं सर्वे काव्यशास्त्रिणः एकमतेन प्रतिपादितवन्तः यत् काव्यस्य कारणानि भवन्ति - (क) प्रतिभा (ख) व्युत्पत्तिः (ग) अभ्यासश्च। अत्र प्रतिभा भवति प्रथमा प्रधाना च।

काव्यशास्त्रस्य प्रथमः आचार्यः भामहः प्रतिपादयति यत्-काव्यं तु जायते जातु कस्यचित्प्रतिभावतः।[१] पुनश्चाग्रे भामहेनोक्तं यद् अनेकविधं शास्त्राणाम् अध्ययनेन कलायाः सम्यक् परिज्ञानं भवति। काव्यवित् कवीन् काव्याञ्च विलोक्य गुरुजनानां सुश्रूषां कृत्वैव काव्यरचना सम्भवत्विति।[२] आचार्यराजशेखरस्य काव्यशास्त्रीयग्रन्थः काव्यमीमांसा काव्यशास्त्रेतिहासे बहुप्रसिद्धमस्ति। ग्रन्थेऽस्मिन् आचार्यशेखरः प्रतिपादितवान् यत् काव्यस्य कारणं भवति केवला प्रतिभा।[३] आचार्यराजशेखरस्य मतमनुसृत्य काव्यशास्त्रस्य उद्भट्विद्वान् आचार्यपण्डितराजजगन्नाथोऽपि प्रतिपादितवान् यत् काव्ये केवला प्रतिभैव भवति कारणम्।[४] आचार्यः वाग्भटः स्वकीये अलङ्कारतिलके नामके ग्रन्थे प्रतिपादितवान् यत् प्रतिभा काव्यस्य कारणं भवति व्युत्पत्त्याभ्यासौ तस्य संस्कारं कुरूतः।[५] आचार्यवाग्भटस्य मतमनुसृत्य काव्यशास्त्रप्रवणः आचार्यजयदेवोऽपि उक्तवान् यत् प्रतिभा काव्यस्य कारणं भवति व्युत्पत्त्याभ्यासौ प्रतिभाया परिपोषकौ यथा लतायाः कारणं भवति बीजं मृत्तिका जलवायुश्च तस्या परिपोषणं कुर्वन्ति।[६]

एवं सर्वे काव्यशास्त्रविचक्षणाः प्रायो एकस्वरेण एवं प्रतिपादिवन्तः यत् काव्यस्य कारणं भवति केवला प्रतिभा। परन्तु काव्यशास्त्रेतिहासे आचार्यआनन्दवर्धनस्य मतानुयायि आचार्यः मम्मटः प्रतिपादितवान् यत् प्रतिभा, व्युत्पत्तिः, अभ्यासः एते सम्मिलितरूपेण काव्यस्य कारणं भवन्ति न तु व्यस्ताः।[७]

काव्यस्य मूलं प्रतिभैव भवति नास्ति विषयेऽस्मिन् कोऽपि सन्देहस्यावसरः। सर्वे काव्यशास्त्रकारः मतमिदं सम्यक् रूपेण प्रतिपादितपवन्तः। किं भवति प्रतिभा? तस्या स्वरूपं किम्? कथं प्रतिभायाः प्रस्फुरणं कवेरन्तर्हृदये मानसे च भवति। सन्दर्भेऽस्मिन् काव्यविचक्षणः गम्भीरं चिन्तनं कृतवन्तः। प्रायो अधिकांश रूपेण काव्यशास्त्रीयविद्वांसः भणुः- प्रतिभा जन्मजन्मान्तरगता संस्कारापेक्षिणी। आचार्यः दण्डी स्वमतं प्रकटयन् कथयति नैसर्गिकी प्रतिभा जन्मजन्मान्तरगतसंस्कारवर्तिनी।[८] वामनाचार्यः

---

१ काव्यालङ्कार-प्रथम परिच्छेदस्य पञ्चम कारिकायाः उत्तरांशः।

२ शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।
लोकोयुक्तिः कलाश्चेति मन्तव्याः काव्यगैर्ह्यमी।।
शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनाम्।
विलोक्यान्य प्रबन्धांश्च कार्यः काव्यक्रियादरः। - तत्रैव

३ स शक्तिः केवलं काव्ये हेतुरिति यायावरीयः। - काव्यमीमांसाः - ६/११

४ तस्य च कारणं कविगता केवला प्रतिभा। - रसगङ्गाधरे

५ प्रतिभैव च कवीनां काव्यस्य कारणम्।
व्युत्पत्यभ्यासौ तस्या एव संस्कारकौ न तु काव्यहेतु।। - अलङ्कारतिलक, पृ० ३

६ प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।
हेतुर्मुदम्बुसम्बद्धबीजोत्पर्त्तिलतामिव।। - चन्द्रालोक - १/६

७ काव्यप्रकाश - १/३

८ न विद्यते यद्यपि पूर्ववासना गुणानुवन्धि प्रतिभानमद्भुतम्।
श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्।। - काव्यदर्श - १/१०४

अपि आचार्यदण्डिनः मतानुसारि वर्तते।[९] मम्मटाचार्योऽपि उक्तवान् यत् प्रतिभा पूर्वजन्मसंस्कारेण समुद्भवति। बिना प्रतिभैव काव्यस्य रचना कथं न सम्भवति। यदि येन-केन प्रकारेण सम्भवति तदा तत् उपहासास्पदं भवति अवश्यं।[१०] एवं प्रकारेण सर्वे प्राचीनकाव्यशास्त्रकाराः प्रतिभायाः स्वरूपं सम्यक् रूपेण प्रतिपादितवन्तः।

आधुनिकसंस्कृतकाव्यशास्त्रीयग्रन्थानां मध्ये आचार्यरेवाप्रसादद्विवेदिमहाभागस्य काव्यालङ्कारिका नामकः ग्रन्थः काव्यतत्त्वानां विवेचनसन्दर्भे प्रसिद्धो महत्वपूर्णञ्च। ग्रन्थेऽस्मिन् द्विवेदिनः प्रतिभाया स्वरूपं उद्घाटयतः कथयन्ति यत् काव्ये प्रतिभा कारणं भवति। स च अर्थ अर्थप्रतिभासनमिति। अर्थस्य प्रतिभासनम् अर्थस्य अवभासना इति। यथा मेघमालामध्ये विद्युच्चमत्कृतिः भवति तथैव प्रतिभा भवतिति। मेघमाला तु प्रज्ञा।[११] प्रो० द्विवेदिमतानुसारेण अर्थप्रतिभासनं नाम अदृष्टचर अपूर्वकल्पितादिवस्तुदर्शनम्। एतेन काव्यघटनानुकूलं शब्दार्थोपस्थितित्वं प्रतिभायाः प्रत्याख्यातम् उपस्थितेः स्मृतिप्रायत्वात्। एवं प्रकारेण प्रो० द्विवेदी पण्डितराजजगन्नाथमतानुसारि प्रतिभायाः स्वरूपं प्रतिपादितम्। अन्ये च पूर्ववर्तिनाः ध्वनिवादिनः काव्याशास्त्रकाराः आनन्दवर्धनमम्मटादायः प्रतिभा व्युत्पत्त्याभ्यासश्च समुदितानां काव्यस्य उत्पत्तौ कारणत्वम् इति निरूपितावन्तः। परन्तु प्रो० द्विवेदि महाभागः सम्यक् रूपेण प्रतिपादितं यत् काव्यस्य कारणं केवला प्रतिभा भवति। प्रो० द्विवेदिनः मतेन शक्तिरेव प्रतिभा-प्रतिभैव च शक्तिरिति। अत्र कारिकामध्ये प्रो० द्विवेदि कादम्बिनीसादृश्येन प्रज्ञायाः सरसत्वं पूर्णत्वञ्च, विद्युत-उद्योतस्य सादृश्येन च प्रतिभासनं चित्रितमिति। लोकेऽस्मिन् स एव कवि काव्यं निर्मातुं शक्नोति प्रभवति यस्य महामतेः हृदये प्रज्ञा लोकोत्तरतत्वैः आपूरिता।

पुनश्च अग्रिमकारिकायां प्रो० द्विवेदिनः उक्तवन्तः यत् भगवान् स्वीयकृपया स्वभक्तनारदादि हृदये यां स्वकीयां मूर्त्तिं प्रकटितवान् स प्रतिभासनं प्रतिभाति।[१२] प्रो० द्विवेदिमहाभागस्य मतं अस्तीति यत् नारदाद्यः महर्षयः समं कोऽपि नास्ति। ते नारदादयः ऋषयः अलौकिकगुणसम्पन्ना आसन् अत एव तेषां हृदये विलक्षणा बुद्धिर्वर्तते सा सामान्यजनानां मध्ये नास्ति। अत एव नारदादि महर्षयः अलौकिकप्रतिभासम्पन्नाः आसन्। भवगच्छक्तिः नारदादिभगवत्कृपापात्रे प्रतिभासमं प्रस्फुरति इति। येषां सामान्य जनानां मध्ये अभावः परिदृश्यते। अतो अलौकिकप्रतिभासम्पन्नाः विरलाः एव भवन्ति।

पुनश्चाग्रे स्वमतं प्रकटयन् प्रो० द्विवेदी उक्तवान्-योगिनां हृदये समाध्यवस्थायां या विषयान्विता ज्योतिष्मती प्रवृत्तिरिति मान्यता वर्तते, कवेः प्रतिभा तस्य स्वसा अस्ति।[१३] प्रतिभा ज्योतिष्मती प्रवृत्तिः

---

९ जन्मान्तरसंस्कारापेक्षिणी सहजा। - काव्यालङ्कार सूत्र - १/३-१६

१० शक्तिः कवित्वबीजरूपः संस्कारविशेषः, यां बिना काव्यं न प्रसरेत्। प्रसृतं वा उपहसनीयं स्यात्।
-काव्यप्रकाश - प्रथम-उल्लासस्य, तृतीयकारिकायाः वृत्तिः।

११ कारणं प्रतिभा काव्ये, सा चार्थ प्रतिभासनम्।
प्रज्ञा कदम्बिनी - गर्भे विद्युदुद्योत - सोदरम्।। - काव्यालङ्कारकारिका-१/२

१२ नारदादिकृपापात्र चेतोधातौ जगत्प्रभोः।
प्रथमं स्व-स्वरूपस्य दर्शनं यत् तदीदृशम्।। - काव्यालङ्कारकारिका - १/३३

इति, सा कवेर्हृदये समाध्यवस्थायां उल्लसति। तस्मिन् समये कविः काव्यं निर्माति। महर्षिपतञ्जलिः स्वकीये योगशास्त्रनामके ग्रन्थे स्वरूपं एवं निरूपयामास -

(क) मैत्री-करुणामुदितोपेक्षाणां सुखदुःखपुण्यविषयाणां भावनातश्चित्तप्रसादनम्।[१४]

(ख) विषयवती वा प्रवृत्तिरुत्पन्ना मनसाः स्थिति निबन्धनी।[१५]

(ग) विशोका वा ज्योतिष्मती।[१६]

काव्यालङ्कारकारः आचार्यः रुद्रटः प्रतिभायाः स्वरूपं प्रतिपादयन् कथितवान् यत् तस्य प्रतिभा शक्तिरिति। मनसि समाध्यवस्थायां कवेरन्तरहृदये नानार्थस्य विस्फुरणं जायते किंवा प्रकटयति सैव प्रतिभा।[१७] ध्वन्यालोककारोऽऽचार्यानन्दवर्धनोऽपि स्वकीये ध्वन्यालोकेनामके ग्रन्थे कथयति महकवीनां सरस्वती मधुरसस्य निष्पन्दनं कृत्वा लोकोत्तरं परिस्फुरणशीलं प्रतिभाविशेषं अभिव्यनक्ति।[१८]

एवं प्रो० द्विवेदी प्रतिभायाः स्वरूपं प्रतिपादयित्वा तेषां द्विधा विभजनं करोति-स्वयम्भू सहेतुश्च।[१९] तत्र प्रथमा आदिकविवाल्मीकिकवौ दृश्यते द्वितीया च अन्यकवीनां मध्ये सन्दृश्यते। प्रतिभायाः प्रथमं स्वरूपं प्रो० द्विवेदीमतानुसारेण अस्तीदं यत् नारदादिहृदये भगवतः स्वत एव स्वरूपं प्रकटित्वा तेषां अलौकिकत्वं दर्शयति सैव प्रथमा स्वयम्भू प्रतिभा स्यात्। सेयं पूर्वजन्मसंस्कारिता संस्कार वशात् सहजरूपेण भगवदनुकम्पया प्राप्यते। अतैव एनं काव्यमीमांसाकारः आचार्यः राजशेखरः सहजा नामा। प्रो० द्विवेदिमतानुसारं द्वितीयासहेतुकप्रतिभायाः कारणानि बहूनि सन्ति। परन्तु तत्र कारणं भवति केवलः सत्वोद्रेकः।[२०] अत्र कारणानि सन्ति बहूनि अदृष्टम्, व्युत्पत्तिः अभ्याश्चेति। काव्यप्रकाशकारमते तु प्रतिभा व्युत्पत्याभासः एते समुदिताः साक्षात्काव्यस्य कारणं भवन्ति। परन्तु पण्डितराजजगन्नाथमतानुसारेण अदृष्टानि, व्युत्पत्त्याभ्यासाश्च प्रतिभां प्रति कारणानि भवन्ति। प्रो० द्विवेदीमहाभागानामपि मतमिदं अस्ति यत् एते प्रतिभां प्रति कारणं भवन्ति।

---

१३ समाधौयोगलग्नानां हृदये विषयान्विता।
ज्योतिष्मती प्रवृत्तिर्या तत्स्वसा प्रतिभा कवेः।। - काव्यालङ्कारकारिका-१/४

१४ योगसूत्र-१.३३

१५ वही - १.३६

१६ वही - १.३६

१७ मनसि सदा सुसमाधीनि विस्फुरणमेनकधा।
अक्लिष्टानि पदानि च विभान्ति यस्यामशौशक्तिः।। - काव्यलङ्कार - १/१५

१८ सरस्वती स्वादु तदर्थवस्तु निष्पन्दमानां महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।। - ध्वन्यालोक-१/६

१९ स्वयंभूश्च सहेतुश्चेत्यसौ लोके द्विधा स्थिता।
आदिमाऽऽदिकवौ दृष्टा द्वितीयान्यत्र दृश्यते।। - काव्यालङ्कारकारिका - १/५

२० द्वितीया या भवन्त्यत्र कारणानि बहून्यपि।
कारणं तु भवत्यत्र सत्वोद्रेकः हि केवलः।। - काव्यालङ्कारकारिका - १/६

प्रो० द्विवेदिमहोदयस्य मतानुसारि प्रतिभाया द्वितीयभेदं प्रति कारणं भवति सत्वोद्रेकः। सत्वोद्रेकस्याऽपि बहूनि प्रभेदानि सन्ति यत् एषां रजस्तमसमानुवेधः भवति। अयं अनुवेधोऽपि संख्यातीता भवति।[२१] अतोऽयं प्रतिभा अतिवैचित्र्यमश्नुते। कारणोऽत्रऽनेकेन कवेः काव्ये बहूनि बन्धानि भवन्ति, यथा वसन्तोद्याने वृक्षश्रियः।[२२] प्रो० द्विवेदीमहाभागस्य कथनं अस्ति यत् अनेनैव कारणेन एकस्य कवेः अपि प्रतिभायां नानात्वं दृश्यते। स्वमतं प्रमाण पुरस्सरी करोति प्रतिपादयति प्रो० द्विवेदी यत् विद्युच्चमत्कृतिः किं सर्वदा एकरूपा भवति?[२३] एवञ्च प्रो० द्विवेदिनः प्रतिभायाः स्वरूपं भेदञ्च प्रतिपादयित्वा काव्यस्य प्रति तेषां उपादाननिमित्तकारणं प्रतिपादितवन्तः। सैव प्रतिभा काव्यं प्रति उपादाननिमित्तकारणं भवति। नास्ति अत्र सन्देहस्यावसरः इति प्रो० द्विवेदिनां मतम्। अतो हि काव्यं सर्वदा प्रतिभायाः अन्तर्गर्भे प्रतिवसति।[२४]

एवं प्रकारेण प्रो० द्विवेदीमहाभागौ आधुनिकसंस्कृतकाव्यशास्त्रे स्वीये काव्यालङ्कारकारिकाख्ये ग्रन्थे प्रतिभायाः स्वरूपं विमृश्य स्वीयं मतं तर्कञ्चोपस्थापितम्। नूनं आधुनिकसंस्कृतकाव्यशास्त्रे सोऽयं कारिकाग्रन्थः काव्यतत्त्वानां विवेचने नूतनं सरणिं उपस्थापयति। अस्मिन् स्फुटे शोधपत्रे अल्पज्ञाया मया विद्वत्प्रवरद्विवेदिमहाभागनप्रतिभासन्दर्भे यत् अनुभूतं चिन्तितं तत् संक्षेपेण प्रस्तुतामिति।

---

२१ रजस्तमसोऽनुवेधानां संख्यातीता तु या स्थितिः।
उद्रेकोऽप्यनया सोऽयमतिवैचित्र्यमश्नुते।। - काव्यालङ्कारकारिका - १/३

२२ एकस्यापि कवेः काव्यप्रबन्धे येन दृश्यते।
बन्धभेदो मधूद्याने वृक्षश्री भेदसोदरः।। - काव्यालङ्कारकारिका - १/८

२३ ततश्च प्रतिभाभेदोऽप्येकस्मिन्नापि दृश्यते।
कवौ किं विद्युदुद्योतः स्यात् सदैवैक सौभगः।। - काव्यालङ्कारकारिका - १/९

२४ उपादानं निमितं च काव्याय प्रतिभैव सा।
द्वितीयं गर्भमात्रे यत् तस्यास्तिष्ठति तत् सदा।। - काव्यालङ्कारकारिका - १/१०

# कालिदाससाहित्ये वैदिकानुष्ठानमहत्त्वम्

प्रो. रमेशकुमारपाण्डेयः

सम्पूर्णे कालिदाससाहित्ये वैदिकविधानानि प्रभूततया विराजन्ते। तेषाञ्च विधानानां संरक्षकाः राजानः दृश्यन्ते यथा --

**कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।**
**तमस्तपति घर्मांशौ कथमाविर्भविष्यति ।।[1]**

विशेषतो यज्ञाः वैदिकविधानेषु मूर्ध्नि स्थिता विराजन्ते। प्रकृतिमानवदेवानां मध्ये यज्ञमाध्यमेन प्रगाढः कश्चन सम्बन्धो दृश्यते। यज्ञमाध्यमेनैव दिव्यशक्तिं सम्प्राप्य ऋषयः राजानश्च निर्विघ्नं बहुविधं कार्यं सम्पादयन्ति। यज्ञेनैव मेघवर्षणं प्रभूतसस्योत्पादनं, सर्वतोभावेन मङ्गलं, सन्तानोत्पत्तिप्रभृतिकार्याणि दृश्यन्ते। मानवजीवनस्य परमपुरुषार्थरूपस्य मोक्षस्य अथवा परमपदस्य स्वर्गस्य लाभः यज्ञेनैव दृश्यते। प्रोक्तं यथा कालिदासेन --

**उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।**
**कर्म्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ।।[2]**

वस्तुतः कालिदाससाहित्ये वैदिकानुष्ठानमधिकृत्य विहितं वर्णनं दृष्ट्वा तेषां विशिष्टं किमपि महत्त्वं समनुभूयते।

अश्वमेध-राजसूय-विश्वजित्प्रभृतीनां यज्ञानां विशदं वर्णनं रघुवंशे दृश्यते येन इक्ष्वाकूणां राज्ञां वैदिकविधानेषु निष्ठा सुतरां परिपुष्टा भवति। सम्पूर्णे साहित्ये यज्ञानां यज्ञाङ्गानां वा प्रभूततया वर्णनं प्राप्यते। अभिज्ञानशाकुन्तलस्य मङ्गलपद्ये अष्टमूर्त्तीनां वर्णनप्रसङ्गे यज्ञसम्बद्धं मूर्त्तिद्वयं नौति कालिदासः। कण्वाश्रमे सर्वत्र यज्ञस्यैव प्रभावः परिलक्ष्यते। कुमारसम्भवमहाकाव्यस्य प्रथमे एव सर्गे अनेके प्रसङ्गा यज्ञसम्बद्धाः दृश्यन्ते यथा --

**1. यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।**
**प्रजापतिः कल्पतियज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ।।[3]**

---

1 अभि. 5/14

2 कुमार. 2/12

3 तत्रैव 1/17

**2. मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभारवाला ।**
**आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥**[4]

**3. गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाषः ।**
**ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥**[5]

**4. तत्राग्निमाधाय समित्समिद्धं स्वमेव मूर्त्यन्तरमष्टमूर्त्तिः।**
**स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार ॥**[6]

**5. अवचितवलिपुष्पा वेदिसंमार्गदक्षा नियमविधिजलानां वर्हिषां चोपनेत्री।**
**गिरिशमुपचचार प्रत्यहं सा सुकेशी नियमितपरिखेदा तच्छिरश्चन्द्रपादैः॥**[7]

अनेन कालिदासस्य यज्ञगता वैदिकानुमता संस्कृतिः प्रमाणिता भवति।

**कालिदास्य शृङ्गारप्रियता**--वस्तुतः कालिदासः सामाजिकव्यवस्थायाः केन्द्रे नृपमेव स्थापयति यः मानवजीवनस्य पुरुषार्थचतुष्टयमभिलक्ष्य सततं जागरूकोऽस्ति। तत्र आश्रमवासिनः वशिष्ठादयः राजगुरवः स्वसुखनिरभिलाषाः निरन्तरं जनकल्याणाय तपः समाचरन्ति सत्यवसरे राज्ञः च यज्ञविशेषे प्रेरयन्ति।

वस्तुतः राजा एव तत्कालीनसमाजस्य साम्राज्यस्य वा धार्मिक-सामाजिकप्रवृत्तौ मुख्यं केन्द्रं भवति। वैदिकसंस्कारेषु पाणिग्रहणसंस्कारोऽन्यतमः। अयमेव संस्कारः राज्ञां राजवंशानुक्रम-संरक्षणे कारणमस्ति। फलतः कालिदासः नायकनायिकयोः परस्परं समुत्पन्नमनुरागं वैदिकविवाहसंस्कारविधिना शुद्धां सन्तानोत्पत्तिं यावद् नयति।

प्रोक्तं यथा --

**सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।**
**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥**
**यथाविधिहुताग्नीनां यथाकामार्चितानाम् ।**
**यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥**

---

4 तत्रैव 1/39
5 कुमार. 1/51
6 तत्रैव 1/57
7 तत्रैव 1/60

**त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।**

**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥**[8]

अस्मिन् सन्दर्भे परस्परानुरागात्मकस्य रसाधिराजस्य शृङ्गाररस्य अद्भुतं वर्णनं प्रस्तौति महाकविः।

**आश्रमे राजवंश्यानां संस्कारः**

राजकुलोद्भवानां कुमाराणां संस्काराः आश्रमेषु दृष्यन्ते। दुश्यन्ततनयस्य भरतस्य कण्वाश्रमे गर्भाधानादारभ्य मारीचाश्रमे जातकर्मादिसंस्कारान् यावत् संस्काराः आश्रमे एव जाताः।

**अभिज्ञानशाकुन्तले यथा --**

**मारीचः** – वत्स कच्चिदभिवन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः ?

**राजा** – भगवन् ! अत्र खलु मे वंशप्रतिष्ठा ।

**मारीचः** – तथा भाविनमेनं चक्रवर्त्तिनमवगच्छतु भवान् । यश्च–

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः

पुरा सप्तद्वीपामवति वसुधामप्रतिरथः ।

इहायं सत्त्वानां प्रसभमदनात् सर्वदमनः

पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥[9]

**राजा** – भगवता कृतसंस्कारे सर्वमस्मिन्नाशास्महे ।

वस्तुतो विविधवैदिकानुष्ठानसमन्विते आश्रमपरिसरे संवर्धितानां राजपुत्राणां मनः शरीरञ्च परिपूततया सर्वथा प्रजापालनयोग्यं भवति। रघुवंशेऽपि लवकुशयोः परिपालनं वाल्मीकेराश्रमे जातम्। एवमेव विक्रमसुतस्य और्वशेयस्य संस्कारविधानम् आश्रमे एव। यथा –

''तापसी –श्रृणोतु महाराजः । एष दीर्घायुः आयुः जातमात्र एव उर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः। यत् क्षत्रियकुमारस्य जातकर्मादिविधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम्। गृहीतविद्यः धनुर्वेदे चाभिविनीतः।''[10]

---

8 रघुवंश 1/5–7

9 अभि. 7/33

10 (वि. 7/10 गद्यभागे)

**ऋषीन् आश्रमांश्च प्रति सर्वत्र पूज्यभावः**

आश्रमव्यवस्थायां कालिदासस्य महान् अनुरागो दृश्यते। गुरोः वशिष्ठस्य आश्रमे सपत्नीको दिलीपः पुत्रकामनया विनीतभावेन गच्छति तत्र च प्राप्य नितरां प्रसीदति प्रशंसति च।

**'अथाभ्यर्च्य विधातारं प्राप्तौ पुत्रकाम्यया ।**
**तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ।।**[11]

**मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।**
**अनुभावविशेषात्तु सेनापरिवृत्ताविव ।।**

स उद्घोषयति यत् इक्ष्वाकूणां सिद्धयः गुरूणामधीनाः सन्ति । फलतः वशिष्ठनिर्देशाद् मनोयोगेन गोसेवाव्रतं पालयति। सदारस्य गुरोः वशिष्ठस्य पादसेवनं कुरुते --

**गुरो सदारस्य निपीड्य पादौ समाप्य सान्ध्यं च विधिं दिलीपः।**[12]

कण्वाश्रमे प्रविष्टो दुश्यन्तोऽपि नितरां श्रद्धाशीलः भक्तियुतश्च दृश्यते ।

यथा --

'राजा - तां द्रक्ष्यामि। सा खलु विदितभक्तिं मां महर्षेः करिष्यति ।'

'राजा - सूत चोदयाश्वान् । पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहि ।'

राजा - विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम'[13]

आश्रमनिवासिनो वशिष्ठवरतन्तुप्रभृतयः ऋषयो मन्त्रकृत इति सम्बोधिताः, यस्य केचन समीक्षकाः मन्त्रकर्तारः' इत्यर्थमनुमीय मन्त्राणां कर्तृत्वमभ्युपगच्छन्ति तन्नोचितम्। वस्तुतः एतद्वर्णनप्रसङ्गः रघुवंशस्य प्रथमसर्गे गुरोः वशिष्ठस्य प्रशंसाप्रसङ्गे पुनः पञ्चमे सर्गे कौत्सदक्षिणावसरे वरतन्तुप्रशंसाप्रसङ्गे आयाति। तद्यथा -

**तव मन्त्रकृतो मन्त्रैर्दूरात् संशमितारिभिः ।**
**प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ।।**

**हविरावर्जितं होतस्त्वया विधिवदग्निषु ।**
**वृष्टीभवति सस्यानावग्रहविशोषिणाम् ।।**

---

11 रघु. 2/35
12 र. 2/22
13 अभि. 1/13 तथा 14 गद्यम्

**पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।**
**यन्मदीयाः प्रजास्तत्र हेतुस्त्वद्ब्रह्मवर्चसम् ॥**
**त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।**
**सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥**[14]

तथा

**अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।**
**यतस्त्वया ज्ञानमशेषमाप्तं चैतन्यमुग्रादिव दीक्षितेन ॥**
**कायेन वाचा मनसापि शश्वद् यत् सम्भृतं वासवधैर्यलोपि ।**
**आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत्॥**[15]

'मन्त्रकृत्' शब्दस्य प्रयोगो न केवलं कालिदासेन विहितोऽपितु 'नमो मन्त्रकृद्भ्यः' इति ब्राह्मणवचनमपि लभ्यते। 'ऋषयो मन्त्रद्रष्टारः।' इत्यनेन मन्त्राणामकर्तृत्वं सुतरां प्रतिष्ठितमस्ति परम्परानुमोदितमपि। अतः मन्त्रकृत् इति पदस्य अर्थो चिन्त्यः। मम मत्या ये ऋषयः मन्त्राणां बहुविधेषु वैदिकानुष्ठानेषु विधिवद्विनियोगे कुशलाः ते वस्तुतः मन्त्रप्रयोगकर्तारः। अयमेवार्थः उभयत्र समुपस्थितप्रसङ्गतः दृढो भवति। मन्त्राणां प्रभावः तेषां साधु विनियोगादेव दृश्यते। तस्माद् मन्त्रप्रभावादेव ते ऋषयः राज्ञः कार्यं निर्विघ्नतया सम्पादयन्ति स्वकीयं यज्ञादिकं वैदिकं कर्म समनुतिष्ठन्ति च। अतः मन्त्रकृतामित्यस्य मन्त्रविनियोगकृतामित्यर्थमेव साधु प्रतीयते।

**निष्कर्षः**

कालिदाससाहित्ये समागतानां कतिपयप्रसङ्गानामनुशीलनेनेदं वक्तुं शक्यते यत् कालिदाससाहित्ये वैदिकानुष्ठानमहत्त्वं सर्वातिशायि वर्तते। महाकविरयं यादृशीं वर्णनानैपुणीं समाश्रित्य सहृदयचेतोहरां कवितामुपनिबध्नाति तादृशीं वैदुषीं घटनासंघटनेऽपि प्रदर्शयति तत्र च वैदिकानुष्ठानवर्णनबाहुल्येन स्ववैदिकमतावलम्बिनीमनुरक्तिं प्रदर्शयति। भारतीयामिमां वैदिकपरम्पराप्रीतिमभिलक्ष्य समीक्षकाः महाकविकालिदासं कविकुलगुरुं भणन्ति इति मदीयमभिमतम्।

---

14 रघुवंशम् 1/61-64
15 रघुवंशम् 5/4-5

# वैदिकसाहित्ये आयुर्विज्ञानम्

**डॉ० सुन्दरनारायणझा**

भारतीयज्ञानगङ्गोत्र्याः गौमुखास्सन्ति ऋग्यजुस्सामाथर्वाख्याः वेदाः। न केवलं भारतीयमेवापितु विश्वस्य समग्रमपि वाङ्मयं वेदेभ्य एव निःसृतम्। तस्मादिदमुच्यते यद्वेदा एव समस्तज्ञान-विज्ञानादीनाम्मुख्यमवलम्बनमिति। अत एवोक्तं मनुना–"सर्वज्ञानमयो हि सः"[1] इति। उभेऽपि ज्ञानविज्ञाने परस्परमेकमपरस्य पूरके स्तः। ज्ञानस्य प्रवृत्तिर्यत्रान्तर्मुखी भवति तत्रैव विज्ञानं कर्मणा स्वकीयं स्वरूपमुद्घाटयति। विज्ञानस्य कर्माणि प्रायोगिकस्थलान्यपेक्षन्ते। तस्मादुक्तं श्रुतौ–"विज्ञानं यज्ञं तनुते"[2] इति। अतो विज्ञानं यज्ञविद्येत्युच्यते, ज्ञानञ्चाध्यात्मविद्येति। एकस्मादनेकस्मिन्नवतरणं विज्ञानं यज्ञविद्या। अनेकस्मादेकस्मिन्नारोहणं ज्ञानं ब्रह्मविद्येत्युच्यते। ब्रह्मविद्यातिरिक्ताः सर्वा अपि विद्या अनेकत्वप्राधान्याद् यज्ञविद्यायामर्थाद्विज्ञान एवान्तर्भवति। आभ्यामेव ज्ञानविज्ञानाभ्यां मानवस्य कृतकृत्यता सम्पद्यते। इदमेव ज्ञानविज्ञानयुगलं मुख्यो धर्मः। तत्र ज्ञानं निःश्रेयसजनकम्, विज्ञानन्त्वभ्युदयहेतुः।[3]

एवमुक्तप्रकारेण वेदेभ्योऽनुप्राणिते संस्कृतवाङ्मये विविधज्ञानविज्ञानात्मकाः विषयाः साधु विवेचिताः सन्ति। तेनैव क्रमेणात्रायुर्विज्ञानविषये तावद्विचार्यते।

आयुर्विज्ञानविषये विचारणात्प्रागायुषो लक्षणं चिन्त्यते–

**शरीरेन्द्रियसत्त्वात्मसंयोगो धारिजीवितम्।**
**नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते।।**[4]

अर्थाच्छरीरजीवयोर्योगो जीवनं तेनावच्छिन्नः काल आयुरित्युच्यते। अतो शरीरप्राणयोः संयोगादायुरुच्यते। आयुरिति भूतात्मनः शरीरनिधनपर्यन्तं धर्माधर्मनिमित्तकसांसारिकसुखदुःखोपभोगसाधनम्। तत्र शरीरजीवयोर्योगात् (जीवनप्राप्तिकालात्) शरीरजीवयोर्वियोगपर्यन्तः (जीवनसमाप्तिपर्यन्तः) काल आयुः कथ्यते। स च कालः वेदेषु स्वयंभूरेवोक्तः। यथा–

**काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम्।**
**कालो ह सर्वस्येश्वरो यः पिताऽऽसीत् प्रजापतेः।।**

---

१. मनु० २/७
२. तै. आ. ८/५/१; तै. उ. २/५/१
३. वैशेषिकसूत्रे १/२ "यतोऽभ्युदयनिः श्रेयससिद्धिस्स धर्मः।"
४. चरकसूत्रे १/४२ भैषज्यरत्नावल्ल्यां द्वितीये पृष्ठे।

**कालः प्रजा असृजत् कालो अग्रे प्रजापतिम्।**
**स्वयम्भूः कश्यपः कालात् तपःकालादजायत्।।**[५]

कालो हि नाम स्वयम्भूरनादिमध्यनिधनः। भूतानि सङ्कलयति संहरणादिति कालः, सुखदुःखाभ्यां भूतानि योजयति इति वा कालः। अथवा कलयति मृत्युसमीपं नयति इति काल, तद्विद्यायोगात् तयोः प्राणशरीरयोर्वियोगात् विश्लेषात् पञ्चत्वं मरणं कथ्यते बुधैरिति। यतः मृत्योः प्रतीकारो नास्ति रोगाणां प्रतीकारोऽस्ति, अतो रुग्भ्यस्तनु रक्षेदिति न जन्तुरिति। यो हि विद्वान् रूग्भ्यस्तनुं रक्षति स वैद्य इत्युच्यते। तदा–

**व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः।**
**एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः।।**[६]

वैद्यो हि खलु भैषज्यविद्यां वेत्ति। भैषज्यविद्यायाः यत्र निरूपणं भवति तदायुर्वेद इत्युच्यते। येन सच्छास्त्रेण सर्वेऽपि प्राणिनः स्वकीयं जीवनं स्वस्थतापूर्वकं यापनार्थमुचितं मार्गमवाप्नुवन्ति तदायुर्वेदविज्ञानमिति। वेदशब्दोऽयं विद्धातोर्निष्पद्यते धातवोऽनेकार्थाः तस्माद्विद्धातोः पाणिनीयव्याकरणे चतुर्ष्वर्थेषु प्रयोगो दृश्यते। तदुक्तं श्रीमता भट्टोजिदीक्षितेन सिद्धान्तकौमुद्याम्–

**सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।**
**विन्दते विन्दतिप्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात्।।**[७]

अर्थात् विद्सत्तायां धातोर्निष्पन्नस्य वेदशब्दस्यार्थो भवति 'सत्ता' विद्ज्ञाने धातोर्निष्पन्नस्य वेदशब्दस्यार्थो भवति 'ज्ञानम्' विद्विचारणे धातोर्निष्पन्नस्य वेदशब्दस्यार्थो भवति 'विचारः'? विद्लृ लाभे धातोर्निष्पन्नस्य वेदशब्दस्यार्थो भवति 'लाभः' इति। तेनायुर्वेद इति पदस्यापि चत्वारोऽर्थाः प्रस्फुटिता भवन्ति। यथा जीवनकालस्यायुषः सत्ता, आयुषः ज्ञानम्, आयुषो विचारः आयुषो लाभश्चेति। अत एवोक्तमायुर्वेदविद्भिः–

आयुर्वेदस्य लक्षणम्–

**आयुर्हिताहितं व्याधेर्निदानं शमनं तथा।**
**विद्यते यत्र विद्वद्भिः स आयुर्वेद उच्यते।।**
**अनेन पुरुषो यस्मादायु विन्दति वेत्ति च।**
**तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः।।**[८]

---

५. अथर्ववेदसंहितायाम् १९/५३/८, १०
६. शाङ्र्गधरसंहितायाम् ६/२५ टिप्पण्याम्
७. सिद्धान्तकौमुद्यां चुरादिप्रकरणे
८. भैषज्यरत्नावल्ल्याम् आयुर्वेदावतारप्रकरणे ५-६ श्लोकौ

अर्थाद्यत्रायुषे अवस्थायै वा हितकारकानामहितकारकानाञ्च पदार्थानामुल्लेखो भवेत् रोगाणां निदानमर्थादुत्पत्तिकारणं शान्त्युपायश्चिकित्सा वा वर्णिता स्यात् तदायुर्वेदमित्याहुर्विद्वांसः। तथा चानेन शास्त्रेण पुरुषाः (प्राणिमात्रं) आयुषः दीर्घायुषश्च लाभः कुर्वन्ति, परेषाञ्चाप्यायुषो ज्ञानं प्राप्नुवन्ति तस्मान्मुनिश्रेष्ठाः एतच्छास्त्रमायुर्वेद इत्युच्यते। चरकोक्तमायुर्वेदलक्षणं यथा--

**हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।**
**मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते।।**[९]

यत्र प्राणिनां हितमहितञ्च, सुखं दुःखञ्च,. आयुषे हिताहितम्, वस्तूनां मानञ्च सम्यगुक्तं तच्छास्त्रमायुर्वेद इत्युच्यते।

आचार्यसुश्रुतेन त्रिविधं दुःखं प्रोक्तम्-आध्यात्मिकमाधिदैविकमाधिभौतिकमिति। तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्चेति। शारीरं वातपित्तश्लेष्माणां वैषम्यनिमित्तं मानसं कामक्रोधलोभमोहभयेर्ष्याविषाद-विषयाविशेषादर्शननिबन्धनम्। अन्तरोपायसाध्यम्, बाह्योपायसाध्यञ्च दुःखं द्वेधा आधिभौतिकमाधिदैविकञ्च। आधिभौतिकम्--मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम्। आधिदैविकञ्च-यक्षराक्षसविनायकग्रहावेशननिबन्धनम्। ''श्रुतिषु प्राणो वा आयुः''[१०] यो वा प्राणः स आयुः''[११] इत्युक्तम्। स चायुर्यज्ञेन यज्ञपुरुषस्याराधनया सिद्ध्यति। तस्मादुक्तं वेदे-''आयुर्यज्ञेन कल्पताम्''[१२] इति। अनेन मन्त्रांशेन यज्ञस्यायुष्कारणत्वं प्रतिपादितं भवति। अस्यार्थम्-''यज्ञेन यज्ञनिमित्तेनायुर्जीवनकालः कल्पतां प्राप्यताम् इत्याह महीधरः।'' जीवानां लोकानां भूतानां भौतिकानाञ्च पदार्थानां यदायुष्यं तस्य संसृष्टिर्यज्ञमुखेनैव भवतीत्यभिप्रायः।

''शतायुर्वै पुरुषः[१३] इति वचनात् मनुष्याणामायुः शतवर्षपर्यन्तं भवति। तत्र शतवर्षपर्यन्तं जीवनधारणे आधिव्याधिजन्यो विघ्नः समुत्पद्यते। तस्मात् व्याधिजन्यविघ्नान्मानवाः शतवर्षपर्यन्तस्यायुषः सम्यगुपभोगं विनैव जीवनयात्रां समापयन्ति, इति बह्व्यः घटनाः दृश्यन्ते श्रूयन्ते च। तत्र मुख्यं कारणं रोग एव। रोगयुक्तेन शरीरेण दीर्घायुष्ट्वं नावाप्तुं शक्यते। तस्माद्वेदेष्वेवंविधं विविधा मन्त्राः प्राप्यन्ते 'अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः''[१४] इत्यादयः। अत्र यक्ष्मेति शब्दः प्रबलरोगस्य बोधकः अमीवश्च सामान्यरोगस्य परिचायकस्तेभ्यः प्रबलरोगसामान्यरोगेभ्यश्च रहितः इत्यर्थे अयक्ष्मा अनमीवेति पदद्वयमुक्तम्। अनागस इति कथनस्याभिप्रायोऽयं वर्तते यत् पूर्वजन्मार्जिता अपराधाः पापास्तेभ्यो जायमानाः रोगाः वर्त्तमानजन्मनि कृतापराधस्य च फलरूपाः रोगाः निवृत्ता भवन्तु। एतदर्थं रोगनाशनाय रोगोत्पत्तिकारणस्यान्वेषणं कृत्वा तस्य कारणस्य शमनमावश्यकम्। अत एव अनागस इति पदमपराधराहित्यस्य ज्ञापकस्तेन वयममृताः मरणभयरहिताः भवेम। एतादृशमस्माकमृषयः भृशं चिन्तितवन्तस्तस्यैव चिन्तनस्य परिणामोऽयं यज्ञो वर्तते। यज्ञेभ्यः सर्वविधरोगस्य शमनम्,

---

९. भैषज्यरत्नावल्ल्यामायुर्वेदावतारप्रकरणे टिप्पण्याम् ४

१०. ऐ. ब्रा. २/३८

११. श. प. ब्रा. ५/२/४/१०

१२. शु. य. सं. १८/२९

१३. मै.संहितायाम् १/६/४

रोगोत्पत्तिकारणस्य च निवारणं भवति। यतो दु:खमित्यपरं नाम रोगस्य। तच्च दु:खं त्रिविधं प्रोक्तम्। तस्य त्रिविधदु:खस्य शान्तये यज्ञोऽपि आध्यात्मिकाधिदैविकाधिभौतिकभेदेन त्रिविध एवोक्त:।

दीर्घायुषमवाप्तुं यज्ञस्य महत्त्वपूर्णं स्थानमस्ति। यज्ञोऽयं संसारस्य सर्वविधकर्मसु श्रेष्ठतमकर्मरूपेण श्रौतग्रन्थेषु व्याख्यात:। तदुक्तं शतपथश्रुतौ ''यज्ञौ वै श्रेष्ठतमं कर्म''[१५] इति। जीवितानाम्प्रति कर्मण उपदेशस्तु श्रुतावप्युक्तम्। तद्यथा–''कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा:[१६] अर्थादस्मिञ्जगति सर्वोऽपि मानव: कर्माणि कुर्वन्नेव शतवर्षपर्यन्तं जीवितुमभिलषेत्। अकर्मण्यो भूत्वा यो जीवति स जीवनरूपं भारमेव वहति। तदुक्तं नीतौ–''ज्ञानं भार क्रियां बिना''[१७] अर्थान्मानवदेहमवाप्य कर्तव्याकर्तव्यज्ञानं लब्धं परं तस्य ज्ञानस्य क्रियया प्रयोग: न कृतं येन तस्य ज्ञानं भाररूपमेव भवति यथा एवमेव जीवनं गृहीत्वा अकर्मण्य: सन् तिष्ठति चेत्तस्य जीवनं भाररूपमेव। यत:–''कर्मणैव हि संसिद्धिमास्थिता जनकादय:''[१८] इति। तानि कर्माणि बहुविधान्युक्तानि शास्त्रेषु। तदुक्तं गीतोपनिषदि–''गहना कर्मणो गति:''[१९] इति। तत्रेदं विचारणीयं भवति यत् कीदृशं कर्म करणीयं येनास्माकं सर्वधिकल्याणं सम्भवेत्। एतस्मिन् विषये प्राह–

**सहयज्ञा: प्रजा: सृष्ट्वा पुरोवाच प्रजापति:।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।।[२०]**
**द्रव्ययज्ञा: तपोयज्ञा: योगयज्ञास्तथापरे।**
**स्वाध्यायज्ञानयज्ञाश्च यतय: संशितव्रता:।।[२१]**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्य: कुरुसत्तम।।[२२]**

अर्थात् पुरा प्रजापति: यज्ञसहिता: अन्त:संज्ञबहि: संज्ञादय: विविधा: प्रजा: सृष्ट्वा उवाच-यत्कर्त्तव्यकर्मरूपेणानेन यज्ञेन ता: प्रजा: वृद्धि: कुरूध्वम्। एष यज्ञ एव युष्माकमिष्टकामधुक् भवत्विति। स च यज्ञ: द्रव्यतप-योग-स्वाध्याय-ज्ञान-अहिंसाव्रतसदृशो विविधरूपोऽस्ति। ये जीवा: यज्ञान्नानुतिष्ठन्ति तेभ्योऽयं मनुष्यलोकोऽपि सुखदायको नास्ति परलोकस्य का कथा? अत इदं सुव्यक्तं यद्यज्ञेभ्य: ऐहिकसर्वसुखसमृद्धीनां प्राप्ति: नाकप्राप्तिश्च भवति। अकं नाम दु:खं तद्रहितं स्थानं नाक इत्युच्यते। अत एवोक्तं वेदे -'ते ह नाकं सचन्त'[२३] इति। दु:खं हि त्रिविधं प्रोक्तं

१३. शु. य. सं. ४/१२
१४. श. प. ब्रा. १/७/१/५
१५. शु. य. सं ४०/२
१६. हितोपदेशे मित्रलाभे-१८ तमे श्लोके
१७. गीता ३/२०
१८. गीता ४/१७
१९. गीता ३/१०
२०. गीता ४/२८
२१. गीता ४/३१
२२. शु. य. सं ३१/१६

तस्माद्यज्ञानुष्ठानेन त्रिविधानामपि दु:खानां शमनं भवति। दु:खमिति पदमत्र ताप: शब्देन बोधित:।

**यज्ञेन तापत्रयान्मुक्ति:–**

पूर्वं यदुक्तं त्रिविधं दु: खमिति तत्तापत्रयम् तस्मादाध्यात्मिकाधिभौतिकाधिदैविकतापत्रयभयान्मुक्तये विभिन्नानां यज्ञानामनुष्ठानमवश्यं कर्त्तव्यमिति प्राचीनै: ऋषिभिर्वैदिकग्रन्थेषु बहुवारमुपदिष्टम्। एतदर्थं प्रतिदिनमाचरणीयैर्देव-पितृ-मनुष्य-भूतब्रह्मयज्ञै: साकमन्येषामपि यज्ञानामिष्टिपशुसोमादीनां वर्णनं वेदेषु यत्र तत्र दृश्यते।

**१. आध्यात्मिकतापान्मुक्ति:–**

तत्रात्मानमधिकृत्य प्रवृत्तमित्याध्यात्मिकम्। तत्तु द्विविधम्-शारीरं मानसञ्चेति। तत्र शारीरं व्याध्याद्युत्थम्। मानसं तावत्स्वजनसम्पर्काज्जातं दु:खम्। यज्ञकर्मणाऽनयोर्द्वयोर्दु:खयोर्विनाशो भवति। तदुक्तमुपनिषदि- ''अयमग्निर्वैश्वानरो योऽयमन्त: पुरुषे येनेदमन्नं पच्यते''[२४] इति। अर्थादस्माकं शरीरे वैश्वानरनाम- कोऽग्निस्तिष्ठति तस्मिन्नग्नौ वयं प्रतिदिनं भोजनद्रव्याणामाहुतिं दद्म:। तयाऽऽहुत्यास्माकं जीवनं सुरक्षितं भवति। सुष्ठुतया सम्पादितेनानेन यज्ञेन वयं दीर्घायु स्वस्थशरीरं च प्राप्नुम:। स्वस्थे शरीरे स्वस्थो मनस्तिष्ठति। अत इदं सिद्धं यदाध्यात्मिकेन यज्ञेनास्माकं मानसिकं शारीरिकं च दु:खं विनश्यति।

**२. आधिदैविकतापान्मुक्ति:–**

अग्निवाय्वादीन् देवानधिकृत्य प्रवृत्तमित्याधिदैविकम्।।' **"अग्निहोत्रं जुहुयात् स्वर्गकाम:''** **''दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम:'' ''अग्निष्टोमेन यजेत स्वर्गकाम:''** इत्यादिभिर्वैदिकवाक्यै: स्वर्गकामनयाऽग्निहोत्रदर्शपौर्णमासज्योतिष्टोमादीनां यज्ञानामनुष्ठानं विहितम्। एभिर्यज्ञैस्संतुष्टा: देवा: स्वर्गरूपं फलं प्रयच्छन्ति। स्वर्गप्राप्त्या सर्वविधदु:खनिवृत्तिस्तु स्वत एव भवति। यत: –''यज्ञेनाप्यायिता देवा वृष्ट्युत्सर्गेण मानवा:। आप्यायनं वै कुर्वन्ति यज्ञा: कल्याणहेतव:।।[२५]

तथाच–''सर्वेषां वा एष भूतानां सर्वेषां देवानामात्मा यद्यज्ञ:।।[२६] अत इदं सिद्धं यद्देवा: यज्ञेभ्य एवोपजीवन्ति। तस्माद्यज्ञ: देवानां तृप्तिकारक:। तुष्टा हि देवा: जगत्कल्याणायोचितं फलं प्रयच्छन्ति। येन मानवानामाधिदैविकताप: शम्यते।

**३. आधिभौतिकतापान्मुक्ति:–**

भूतानि प्राणिनोऽधिकृत्य प्रवृत्तमित्याधिभौतिकम्। व्याघ्रचौराद्युत्थम्। यज्ञप्रभवात् प्राणिन: परस्परं वैरभावं त्यक्त्वा मैत्रीभावं पोषयन्ति। यज्ञादिदिव्यसम्पत्सम्पन्नानां राष्ट्रे तस्करा:, कृपणा:, मद्यपायिन:, कर्महीना:, मूर्खा: स्वैराचारा:, स्वैरिण्यश्च न भवन्तीति तथ्यं निर्दिशति श्रुति:–

---

२३. बृहज्जाबालोपनिषदि ५/९

२४. पद्मपुराणे ६३/१२४

२५. श. प. ब्रा. १४/३/२/१

**न मे स्तेनो जनपदे न कदर्यो न मद्यपः।**
**ना नाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः॥**[२७]

इत्यादिभिः श्रौतवचनैर्यज्ञेभ्यः सर्वकल्याणं भवति। यज्ञेषु यजमानाः ऋत्विजश्च देवान् प्रीणयन् प्रार्थयन्ति यत्- ''मा न स्तोके तनये मान आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान्! रुद्रभामिनो वधीर्हविष्मन्तः सदमित्वा हवामहे॥''[२८] अर्थात् हे रुद्रः! अस्माकं पुत्रे पौत्रे च मा हिंसीः। अस्माकं जीवने मा हिंसीः, अस्माकं धेनुषु मा हिंसी!, अश्वेषु मा हिंसीः, क्रोधयुतानप्यस्माकं वीरान् (भृत्यान्) मा वधीः। वयं हविर्युक्तास्सन्तः सदैव त्वां यागायाह्वयामः। एवमेवानेकत्र कल्याणप्राप्त्यर्थं भौतिकसुखसमृद्धिलाभार्थञ्च देवतानां प्रार्थनयाऽनुस्यूताः मन्त्राः वेदेषु सन्ति।

''देवा यज्ञमतन्वत भेषजम्''[२९] इति। अर्थात् देवाः चिकित्सकैर्विधीयमानां क्रियां प्रभावयुक्तां कुर्वन्ति। अथर्ववेदे यज्ञस्यारोग्यकारकप्रभावस्य वर्णनमुपलभ्यते-

**मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्।**
**ग्राहिर्जग्राह यद्येतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम्॥ इति।**[३०]

अर्थात् कुशलो वैद्यः राजयक्ष्मादिसंक्रामकरोगैर्युक्तान् संदिग्धैरज्ञातरोगैर्युक्तान् च मानवान् (रुग्णान्) जीवदवस्थायां स्थित्यर्थं होमधूमस्योपयोगं करोति। तत्राह-सायणः-बालग्रहरोगे निरन्तरस्त्रीसंगतिजनितयक्ष्माणि च पूतिगन्धमत्स्यसहितम्। ओदनम् अभिमन्त्र्य भोजनकाले व्याधितम् आशयेत्। तथाऽनेन सूक्तेन अरण्यतिलैधज्वालितेनोदपात्रेण उषःकाले (अरण्ये) गृहे वा व्याधितम् अवसिञ्चेत् मार्जयेत् आचामयेच्च। तथा सर्वव्याधिनिर्वृत्तये चानेन सूक्तेन व्याधितम् उपस्पृश्य अभिमन्त्रयेत्।

उपर्युक्तेन विवेचनेन स्फुटं भवति यद्वेदेषु संस्कृतवाङ्मयेषु च सर्वत्र ''शरीरमाद्यं खलु धर्मसाधनम्'' इत्याभाणकमनुसृत्यायुर्विज्ञानविषयकं वर्णनं वर्तते। आयुषः प्राधान्यं सर्वत्र वर्तत एव। यतः प्राणिनः समस्तमपि क्रियाकलापमायुष्यमधिकृत्यैव तिष्ठति। यावदेवायुः तावत्कर्म। तच्चायुस्त्रिविधः बाल्ययौवनजरारूपः। तद्यथोक्तम-

**त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्।**
**यद्देवेषु त्र्यायुषं तन्नोऽस्तु त्र्यायुषम्॥**[३१]

इत्यनेन श्रौतवचनेन स्पष्टं यत् त्रिविधमप्यायुरस्माकं जीवने तिष्ठेत्। आयुषः स्वरूपं वेदेष्वेवमुक्तम्-'' भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशेमहि

२६. छां. उप. ५/११/५
२७. शु. य. सं १६/१६
२८. शु. य. सं. १९/१२
२९. अ. सं. ३/११/१
३०. शु. यं. सं. ३/३२
३१. ऋ. सं. १/८९/८
३२. मै. १/७/५; काठक सं. ८/२

देवहितं यदायुः।।[३२] अत्र प्रश्नोत्पद्यते यद्देवहितमायुर्नाम किम्? तदुच्यते-''जरा वै देवहितमायुः'[३३] अर्थान्मनुष्यः शतवर्षस्यायुष उपभोगायायुषस्तृतीयां जरावस्थां प्राप्नुयात्। जरावस्थाप्राप्तौ सत्यां देवहितमायुराप्तिर्मन्यते। तस्माद् वृद्धावस्थाप्राप्तिकालं यावत्तस्य मानवस्य (जीवस्य) जीवने अस्वस्थता दुर्घटनाद्याः जीवनहानिकारिका बाधाः नागच्छन्तु। एवं जरावस्थां प्राप्यैव मृत्युमाप्नुयात्। देवहितस्यायुषः प्राप्तिस्तु यज्ञेनैव भवति। तदुक्तमपि–

''यज्ञेनास्मै (यजमानाय) आयुर्दधाति'', ''सर्व एव एते। एते (ऋत्विजः) अस्मै चिकित्सन्ति''[३४] इति। अर्थाद्यज्ञेनैव मानवः सात्विकमायुं प्राप्तुं शक्नोति। यदि कदाचिज्जीवनकाले काचिद् बाधा समुत्पद्येत चेद्यज्ञेन तस्य चिकित्सां कुर्यादिति। अत्र वाक्ये यज्ञकर्तुर्यजमान एव प्रधानपुरुषः वर्तते। तमेवोदिश्योक्तं वर्तते यत् तस्मै यजमानाय यज्ञेनायुर्दधाति। यदि मध्ये कश्चित् रोगोत्पद्यते तर्हि यज्ञेनैवास्मै यजमानाय ऋत्विजः चिकित्सन्तीति।

शतवर्षपर्यन्तं देवहितमायुमवाप्य स्वस्थः सन् तिष्ठेदिति कामना वेदेष्वनेकत्रोपलभ्यते। तद्यथा–

''तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शत्ँ श्रृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्।।''[३५]

मन्त्रेऽस्मिन् शतवर्षादधिकस्यायुषः वर्णनं शतं भूयश्च शरदः' इत्यनेन पदेन कृतं दृश्यते। तद्विषये छान्दोग्योपनिषदि रोचकेनाख्यानेनोक्तम्-''पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि तत्प्रातः सवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातः सवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदं सर्वं वासयन्ति। तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातः सवनं माध्यन्दिनं सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति। अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनं सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदं सर्वं रोदयन्ति। अथ यान्यष्टचत्वारिंशद्वर्षाणि तृतीयसवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयसवनं तस्यादित्या अन्वायत्ताः प्राणवावादित्या एते हीहं सर्वमाददते। एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्रह षोडशं वर्षशतं जीवति य एवं वेद।।''[३६] अर्थात् मानवस्य जीवनं यज्ञमयमस्ति। मानवस्यायुषः यो प्रथमः चतुर्विंशतिवर्षकालः स प्रातः सवनं गायत्री छन्दोमयः गायत्रमेव प्रातः सवनं तस्य च वसवो देवताः। वसवा हि सर्वमिदं जगत् वासयन्ति। यद्वितीयः कालः चतुश्चत्वारिंशद्वर्षात्मकः स माध्यन्दिनसवनं त्रिष्टुप्छन्दोमयः। त्रैष्टुभमेव माध्यन्दिंन सवनं तस्य च रुद्रा देवताः। रुद्रा हि सर्वमिदं जगत् रोदयन्ति। यस्तृतीयः कालः अष्टाचत्वारिंशद्वर्षात्मकः स तृतीयं सवनं जगती छन्दोमयः। जागतमेव तृतीयं सवनं तस्य च आदित्या देवताः। आदित्या हि सर्वमिदं जगदाददते।

---

३३. मै. २/३/५

३४. शु. य. सं. ३८/२४

३६. छां. उप. ३/१६/१-७

इत्यनेन व्याख्यानेन षोडशोत्तरशतवर्षात्मकं जीवनं प्रोक्तम्। एवमुक्तप्रकारेण मानवः स्वकीयस्य जीवनस्य विभागपूर्वकं तत् तदायुषः कालावधौ प्रातः सवनं, माध्यन्दिनं सवनं, तृतीयं सवनं च भावयन् शास्त्रोक्तेन विधिना जीवनचर्यामाचरति, सोऽल्पायुर्न भवति। स सर्वदा स्वस्थः सन् षोडशोत्तरवर्षपर्यन्तमवश्यमेव जीवति। इत्यनेन कथनेन ''शतं भूयश्च शरदः शतात्'' इत्युक्तेः परिपुष्टिर्जायते।

एतदेवाभिलक्ष्य ज्यौतिषशास्त्रे विंशोत्तरीमहादशायाः परिकल्पना कृताऽस्ति। तेन प्रमाणेन सामान्यतः मानवानामायुः विंशत्युत्तरशतवर्षपर्यन्तं (१२० वर्षम्) भवत्येव।

एतदर्थम्स्माकम् ऋषिभिः चरकसुश्रुतादिभिरनेकविधायुर्वेदविज्ञानरूपं शास्त्रं विनिर्मितं यत्र विविधाधिव्याधिग्रस्तानां मनुष्याणां कल्याणायोपचारपूर्वकमौषधीनां विधानमपि विहितमस्ति। सम्पूर्ण-मायुर्विज्ञानशास्त्रं प्राणिनां सुखपूर्वकजीवनयापनायानेकविधसाधनं प्रदर्श्य जनकल्याणं सम्पादयति।

अतः स्पष्टं यत्संस्कृतसाहित्ये आयुर्विज्ञानस्य प्राथम्येन महत्त्वं प्रतिपादनञ्चास्ति। नास्त्यत्र केषाञ्चिल्लेशमात्रमपि सन्देहस्यावसरः।

# 'अनुपसर्जनात्' सूत्र एक अनुशीलन

श्री रामकरण

''अनुपसर्जनात्''[1] यह अधिकार सूत्र है। इससे आगे जितने भी ''टिड्ढाणञ्द्वयसज्दघ्नञ्मात्र-च्तयप्ठक्ठञ्क्वरप''[2] इत्यादि सूत्र का अर्थ है कि टित् आद्यन्त से विहित 'ङीप्' आदि स्त्री-प्रत्यय अनुपसर्जन प्रतिपादिक से होते हैं, उपसर्जन से नहीं। यहाँ ''प्रथमा निर्दिष्टं समास उपसर्जनम्[3]'' सूत्र सू विहित 'उपसर्जन' संज्ञा से अभिप्राय नहीं है, अपितु यहाँ उपसर्जन का शाब्दिक अर्थ गौण' या अप्रधान है तथा 'अनुपसर्जन' का अर्थ 'प्रधान' है। व्याकरण में 'उपसर्जन' वह शब्द है, जिसका मूल स्वतन्त्र स्वरूप व्युत्पत्ति के कारण या रचना में प्रयुक्त होने के कारण बदल गया हो और साथ ही दूसरे शब्द के अर्थ का भी वह निर्धारण करे। अत: ङीप् आदि स्त्री-प्रत्यय 'अनुपसर्जन' से हों, दूसरे के प्रति गुणीभूत अर्थ वाले प्रातिपदिक से न हो। जैसे 'कुरुचरी'। मद्रचरी'। 'कुरुषु चरतीति' 'कुरुचरी अर्थ में अधिकरण उपपद रहते ''चरेष्ट[4]'' सूत्र से 'चर्' धातु को 'ट' प्रत्यय होता है तथा उसके 'टित्' होने से 'चर' शब्द 'टिदन्त' बनता है। यहाँ 'चर्' धातु से 'ट' प्रत्यय किया गया है। अत: ''प्रत्यय ग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्''[5] इस परिभाषा के अनुसार तदादि तदन्त समुदाय 'चर' शब्द ही 'टिदन्त' माना जाता है, 'कुरुचर' नहीं। क्योंकि 'ट' प्रत्यय का विधान 'कुरु' से न होकर केवल 'चर' से किया गया है। अत: प्रकृत सूत्र सू विधान सामर्थ्य से तदन्तविधि होकर टिदन्त है अन्त में जिसके ऐसे टिदन्तान्त अनुपसर्जन 'कुरुचर' प्रातिपदिक से 'ङीप्' प्रत्यय होकर 'कुरुचरी' बनता है। 'कुरुचर' शब्द टिदन्तान्त होने से 'अनुपसर्जन' भी है क्योंकि 'कुरु देश में चरने वाली' इस अर्थ में वह अन्य के प्रति गुणीभूत भी नहीं है। अत: कुरुचरी इष्ट रूप बनता है।

परन्तु टित् आद्यन्त से विहित यह 'ङीप्' प्रत्यय उपसर्जन अर्थात् 'गौण' या 'अप्रधान' से नहीं होता। यथा बहुकुरुचरा मथुरा'। 'बहव: कुरुचरा यस्यां नगर्यां सा बहुकुरुचरा मथुरानगरी' यहाँ बहुव्रीहि समास होने से 'कुरुचर' अनुपसर्जन अर्थात् प्रधान नहीं है, क्योंकि यह पद अन्य नगरी अर्थ के प्रति उपसर्जन अर्थात् 'गुणीभूत' है। अत: यहाँ टिड्ढाणञ्[6] इत्यादि सूत्र से ङीप् प्रत्यय न होकर ''अजाद्यतष्टाप्[7]'' सूत्र से सामान्य 'टाप्' प्रत्यय होकर 'बहुकुरुचरा' रूप बन जाता है।

१. पाणिनीयाष्टाध्यायी 4.1.14
२. पा. 4.1.15
३. पा. 1.2.43
४. पा. 3.2.16
५. परिभाषेन्दुशेखर संख्या-23
६. पा. 4.1. 15
७. पा. 4.1.4

इस प्रकार प्रकृत सूत्र का यही प्रयोजन है कि 'अनुपसर्जन' तथा 'प्रधान' अर्थ वाले प्रातिपदिक से ही तदन्तविधि होकर 'ङीप्' आदि प्रत्यय हों, 'उपसर्जन से नही। भाष्यकार ने ''येन विधिस्तदन्तस्य''[8] सूत्र के भाष्य में समासप्रत्ययविधौ प्रतिषेधा:[9] इस वार्तिक द्वारा प्रातिपदिक से प्रत्यय विधान करने में तदन्तविधि का निषेध किया है। वार्तिक से अभिप्राय है कि जिस विशेषण के कारण समास या प्रत्ययों का विधान होता है वहाँ तदन्त विधि नहीं होती। परन्तु 'कुरुचरी' शब्द में तदन्तविधि न होते हुए भी प्रकृत सूत्र के वचन–सामर्थ्य से यहाँ स्त्री–प्रत्यय विधान में तदन्तविधि मान ली गई है। उक्त 'समास' इत्यादि वार्तिक को 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति''[10] इस परिभाषा द्वारा कहा गया है, जिसका अर्थ है कि 'प्रत्यय को ग्रहण करने वाले प्रातिपदिक से तदन्तविधि नहीं होती। यथा–''नडादिभ्य: फक्''[11] सूत्र द्वारा केवल नडादि प्रातिपदिकों से ही 'फक्' प्रत्यय का विधान किया गया है। इसलिए नडाद्यन्त प्रातिपादिकों से यह 'फक्' प्रत्यय नहीं होगा। अत: 'नड' शब्द से 'फक्' प्रत्यय होकर 'नाडायन: यह इष्ट रूप बनता है। परन्तु नडशब्दान्त 'सूत्रनड' से 'फक् प्रत्यय नहीं होगा, वहाँ हो ''अत इञ्''[12] प्रत्यय होकर 'सौत्रनाडि' यह रूप बनेगा अत: यहाँ तदन्तविधि नहीं होगी।

''येन विधिस्तदन्तस्य[13]'' इस सूत्र के अन्तर्गत 'उगिद्वर्णग्रहणवर्जम्[2]'' यह वार्तिक पढ़ा गया है। यह वार्तिक तदन्त विधि का निषेध करने वाली उक्त 'ग्रहणवता०[15] परिभाषा का अपवाद है। वार्तिक का अर्थ है कि 'जिन सूत्रों में 'उक्' इत्संज्ञकों का ग्रहण है तथा किसी एक वर्ण या प्रत्यय के रूप में विधान किया जाए वहाँ तदन्तविधि हो जाती है। यथा–भवती' अतिभवती, परमभवती, अतिमहती'। इन उदाहरणों में 'उगितश्च''[16] सूत्र से 'उगित्' प्रतिपदिक से विहित 'ङीप्' प्रत्यय उगिदन्त' प्रातिपदिक से भी हो जाता है। यथा 'भवत्' इस 'उगित्' प्रातिपदिक से 'ङीप्' प्रत्यय होकर तथा परमभवत् से भ 'ङीप्' प्रत्यय होकर 'अतिभवती', अतिमहती' तथा परमभवती रूप बन जाते हैं। इसी प्रकार वनोर च[17] सूत्र में वनन्त के साथ वन्नन्तान्त' प्रातिपदिक से भी 'ङिप्' तथा रेफादेश होकर 'धीवरी' तथा 'अतिधीवरी' रूप बन जाते हैं। वर्णग्रहण में जैसे ''अत इञ्[18]'' सूत्र में आकर वर्ण का ग्रहण है। उससे केवल अकारवर्ण से जैसे 'अस्य अपत्यं इ:' यहाँ इञ्'

---

८. पा. 1.1.72
९. पा. 1.1.72 पर वार्तिक
१०. परि. सं. 31
११. पा. 4.1.99
१२. पा. 4.1.95
१३. पा. 1.172
१४. पा. 1.1.72 पर वार्तिक
१५. परि सं. 31·
१६. पा. 4.1.6
१७. पा. 4.1.7
१८. पा. 4.1.95

प्रत्यय होता है वैसे ही 'दक्षस्यापत्यं दाक्षि:' यहाँ अकारवर्णान्त 'दक्ष' से भी तदन्तविधि होकर 'इञ्' प्रत्यय हो जाता है। इसके अतिरिक्त ''अजाद्यतष्टाप[19]'' सूत्र के अजादिगण में पठित ''शूद्रा चामहत्पूर्वा जाति:[२०] इस गणसूत्र में 'अमहत्पूर्व' ग्रहण से भी सिद्ध होता है कि यहाँ स्त्री प्रत्यय विधान में प्रातिपदिक से तदन्तविधि हो जाती है।

प्रकृत सूत्र का मुख्य प्रयोजन 'कौम्भकारेय:' रूप को सिद्ध करना है। इसके अभाव में 'कुम्भकारेय:' यह अनिष्ट रूप बनता है। क्योंकि–'कुम्भं करोति इति कुम्भकार:' स्त्रीलिङ्ग 'कुम्भकारी। कुम्भकार्या: अपत्यं कौम्भकारेय:' यहाँ 'कुम्भकार' शब्द से कर्म उपपद रहते 'कृ' धातु से ''कर्मण्यण्''[21] सूत्र से 'अण्' प्रत्यय तथा ''अचो ञ्णिति[22]'' सूत्र से वृद्धि होकर अण्णन्त 'कार' शब्द बनता हैं यहाँ प्रत्ययग्रहण परिभाषा से 'कार' शब्द अण्णन्त है न कि 'कुम्भकार' क्योंकि 'अण्' प्रत्यय 'कार' से ही किया गया है न कि 'कुम्भकार' शब्द से। 'कृद्ग्रहणे गतिकारकस्यापि ग्रहणं भवति'[23] इस परिभाषा का 'कृत्' प्रत्यय के ग्रहण में ही प्रयोग होने से 'कुम्भकार' शब्द अण्णन्त' नहीं माना जा सकता। क्योंकि ''टिड्ढाणञ्[24]'' सूत्र में 'अण्' प्रत्यय ''कर्मण्यण्'' सूत्र से कृत् संज्ञक भी है तथा ''प्रागदीव्यतोऽण्[25]'' सूत्र से तद्धित संज्ञक भी है। अत: यह परिभाषा 'कृत' तथा 'अकृत्' के साथ–साथ ग्रहण में प्रयुक्त नहीं होती है। प्रकृत सूत्र के अभाव में 'अण्' प्रत्ययान्त 'कार' शब्द ङीप् प्रत्यय होकर 'कारी' यह स्त्री प्रत्ययान्त शब्द बनेगा। 'कुम्भ' के साथ 'कारी' का एकार्थीभाव होने पर भी 'कुम्भकारी' के स्त्री प्रत्ययान्त न होने से ''स्त्रीभ्यो ढक्''[26] से अपत्य अर्थ में जो 'ढक्' प्रत्यय होता है वह केवल 'कारी' से प्राप्त होगा। ऐसी स्थिति में ''किति च''[27] सूत्र से आदि वृद्धि केवल 'कारी को होगी, न कि 'कुम्भ' से। इस प्रकार 'कुम्भकार्या: अपत्यं 'कुम्भकारेय:' यह अनिष्ट रूप प्राप्त होता है जबकि इष्ट रूप 'कौम्भकारेय: है। प्रकृत सूत्र के बनाने पर तो 'अणप्रत्ययान्त' से तदन्तविधि होकर 'अण्णन्तान्त अनुपसर्जन प्रातिपदिक 'कुम्भकार' बनता है। तब 'ङीप्' प्रत्यय केवल 'कार' से न होकर अण्णन्तान्त कुम्भकार से होगा तथा 'कुम्भकारी' यह स्त्री प्रत्ययान्त शब्द बनेगा। तब 'ढक्' प्रत्यय होकर 'कुम्भ' को आदि वृद्धि होकर 'कौम्भकारेय:' यह इष्ट रूप बन जाता है। अत: प्रधान प्रातिपदिक में तदन्तविधि द्वारा 'ङीप्' आदि प्रत्यय करने के लिए यह सूत्र अत्यन्त आवश्यक है।

---

१९. पा. 4.1.4
२०. पा. सू. 4.1.4 पर गणसूत्र
२१. पा. 3.2.1
२२. पा. 7.2.115
२३. परि. सं. 28
२४. पा. 4.1.15
२५. पा. 4.1.83
२६. पा. 4.1.120
२७. पा. 7.2.118

प्रकृत सूत्र के खण्डन के सम्बन्ध में वार्तिककार द्वारा कुछ नहीं कहा गया है। भाष्यकार ने इस सूत्र का खण्डन साक्षात् शब्दों में न करके ''सर्वादीनि सर्वनामानि''[28] सूत्र के भाष्य में 'संज्ञोपसर्जनप्रतिषेध: इस वार्तिक का खण्डन करते हुए कहा है–'उपसर्जन प्रतिषेधश्च न कर्त्तव्य। अनुपसर्जनात् इत्येष योग: प्रत्याख्यायते। तमेवमभिसंभत्स्याम:– अनुपसर्जन अ-अ-अ-आदिति। "अकारान्त आकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ''[29]। इस भाष्यवचन का आशय यह है कि यदि प्रकृति सूत्र के प्रयोजनों को अन्यथा सिद्ध कर दिया जाए तो इसका प्रत्याख्यान संभव है तथा इस प्रत्याख्यात सूत्र का उपयोग अन्य प्रयोजन के लिए हो जाएगा। वह प्रयोजन यह है कि 'अनुपसर्जनात्' को पंचमी का एकवचन न मानकर अनुपसर्जन अ-अ अत्। इस प्रकार अविभक्तिक सौत्र निर्देश माना जाएगा। तब इसका अर्थ यह होगा कि 'अकारान्त' से परे 'त्यदादीनाम्[30] सूत्र से विहित आकार और ''अदड् डतरादिभ्य: पञ्चभ्य[31]'' से विहित 'अद्ड् (अत्) आदेश ये दोनों अनुपसर्जन से होता है। उससे तमतिक्रान्त: अतितद् ब्राह्म:' तथा कतरन् अतिक्रान्तं कुलम् अति कतरं कुलम्' यहाँ सर्वादिगण पठित 'तद्' और 'कतर' शब्दों के उपसर्जन होने के कारण क्रम से 'त्यदादीनाम' से आकर तथा ''अदड्० इत्यादि सूत्र से 'अदड्' आदेश नहीं होंगे तो सर्वनाम में उपसर्जन प्रतिषेध की आवश्यकता नहीं रहेगी। उपसर्जन का प्रतिषेध प्रकृत सूत्र से ही हो जाएगा। यद्यपि प्रकृत सूत्र के केवल आकार तथा उदड् की ही 'उपसर्जन' से व्यावृत्ति होगी। अन्य ''सर्वनाम्न' स्मै[32]'' से विहित स्मै की व्यावृत्ति उपजर्सन से नहीं होगी क्योंकि प्रकृत सूत्र से 'अ' तथा 'अत्' ही निर्दिष्ट किए गए है 'स्मै' आदि नहीं। उससे 'सर्वमतिक्रान्ताय, अति सर्वाय यहाँ उपसर्जन बने 'सर्व' शब्द की सर्वनाम संज्ञा का निषेध न होकर 'स्मै' भाव प्राप्त होगा। इसलिए उपसर्जन प्रतिषेध का खण्डन करने के लिए किया गया यह 'अनुपसर्जनात्' का विशेष व्याख्यान एकांगी है।

प्रकृत सूत्र की प्रयोजनवता सिद्ध करने के लिए यहाँ शंका की गई है कि प्रधान प्रातिपदिक से तदन्तविधि करने के लिए प्रकृत सूत्र क आवश्यकता है, जिससे 'कौम्भकारेय:' यह इष्ट रूप सिद्ध हो सके। इस सूत्र के अभाव में तो 'कुम्भकारी' शब्द के स्त्री प्रत्ययान्त न होने से केवल 'कारी' शब्द से 'ढक्' प्रत्यय होगा तथा ''किति च''[33] सूत्र से आदि वृद्धि 'कारी' को ही होगी। जब 'कुम्भकारेय: यह अनिष्ट रूप बनता है। प्रकृत सूत्र के बनाने पर तो कुम्भकारी' अनुपसर्जन स्त्री प्रत्ययान्त हो जाता है। तब 'ढक्' प्रत्यय 'कुम्भकारी' शब्द को होकर आदि वृद्धि भी 'कुम्भ' के उकार को हो जाती है तथा 'कौम्भकारेय:' यह इष्ट रूप बनता है। इस प्रकृत सूत्र के अभाव

---

२८. पा. 1.2.27

२९. महाभाष्य भाग-1 सू.त्र 1.2.27

३०. पा. 7.2.102

३१. पा. 7.1.25

३२. पा. 7.1.14

३३. पा. 7.2.118

में 'कृदग्रहण'[34] परिभाषा से भी कुम्भकार शब्द के अण्णन्त न होने से 'ङीप्' प्रत्यय की प्राप्ति नहीं होगी। क्योंकि यह परिभाषा केवल 'कृदग्रहण' में लगती है जबकि यहां 'कृत' तथा 'अकृत' दोनों का ग्रहण है।

इस प्रकार सूत्र की सार्थकता सिद्ध करने के बाद उसका प्रत्याख्यान करते हुए कहा गया है कि यह बात नहीं है। कुम्भकार के कृदन्त न होने पर भी उसका अवयव 'कार' शब्द तो 'प्रत्यय ग्रहण[13] परिभाषा से कृदन्त है ही। कृम्भकार' के अवयव 'कार' शब्द से ही ''टिडढाणञ्''[36] इत्यादि सूत्र से 'ङीप् कर लिया जाएगा। कुम्भ के साथ उसका एकार्थीभाव भी बना रहेगा। फिर 'स्त्री प्रत्यये चानुपसर्जने न[37] इस परिभाषा से 'अनुपसर्जन' स्त्री प्रत्यय में तदादि नियम का अभाव होने से 'कुम्भकारी' को भी स्त्री प्रत्ययान्त मानकर 'ढक्' प्रत्यय तथा 'कुम्भ' का वृद्धि होगी। उससे प्रकृत सूत्र के अभाव में भी 'कौम्भकारेय:' यह इष्ट रूप बन जाएगा। 'स्त्री प्रत्यये' यह परिभाषा अन्य प्रयोजनों के लिए भी स्वीकार्म है।

'स्त्री प्रत्यये चानुपसर्जने न'।[38] इस परिभाषा का आश्रयण करने से 'कारी' के समान 'कुम्भकारी' को भी स्त्री प्रत्ययान्त मानकर उससे 'ढक्' को जाएगा तो कौम्भकारेय:' के सर्वथा शुद्ध हो जाने से यह प्रकृत सूत्र प्रत्याख्यान के योग्य हो जाता है; क्योंकि जो इसका मुख्य प्रयोजन था वह अन्यथा सिद्ध कर दिया गया है।

''सर्वादीनि सर्वनामानि''[39] सूत्र के भाष्य तथा उस पर कैयट कृत व्याख्या के आधार पर प्रकृत सूत्र का प्रत्याख्यान करने पर भी प्रश्न उठता है कि 'स्त्री प्रत्यये' इस परिभाषा से प्रत्ययग्रहण में तदादिनियम का अभाव मानने में यह कैसे समझा जाएगा कि 'कार' शब्द से 'ङीप्' करने पर भी 'कुम्भकारी' शब्द 'ढक्' प्रत्यय होगा 'कारी' शब्द से नहीं। जब अनियम ही हो गया तो जैसे 'कुम्भकारी' से 'ढक्' किया जाएगा वैसे ही कभी 'कारी शब्द से भी 'ढक् की प्राप्ति रहेगी। उस समय भी वहीं दोष होगा कि कभी 'कौम्भकारेय:' तो कभी 'कुम्भकारेय:' बनेगा। इष्ट तो यही है कि नियम पूर्वक 'कौम्भकारेय:' बने। अत: उसके लिए इस प्रकृत सूत्र की परम आवश्यकता है।

यदि यह कहा जाये कि स्त्री प्रत्यय में तदादिनियम के अभाव द्वारा अधिक का ही ग्रहण होगा, न्यून का नहीं। 'कारी' से अधिक 'कुम्भकारी' को ही स्त्री प्रत्ययान्त माना जाएगा। केवल 'कारी' को नहीं तो इसमें कोई विनिगमना नहीं है। कोई यह भी कह सकता है कि अनियम की दशा में जैसे अधिक का ग्रहण होगा वैसे न्यून का क्यों होना चाहिए अर्थात् न्यून का भी ग्रहण होना चाहिए। अत: स्थिर व्यवस्था के लिए इस सूत्र का बनाना आवश्यक है।

---

३४. परि. सं. 28

३५. परि. सं. 23

३६. पा. 4.1.15

३७. परि. सं. 26

३८. परि. सं. 26

३९. पा. 1.1.27

# काशकृत्स्नव्याकरण और उनका संज्ञाप्रकरण

डॉ. रविन्द्र कुमारी

व्याकरणशास्त्र के दार्शनिक पक्ष पर विचार करते हुए विद्वानों ने शब्द को ब्रह्म कहा है और यह भी बताया है कि कोई भी ऐसा प्रत्यय (ज्ञान) नहीं है, जो शब्द से बहिर्भूत हो। सम्पूर्ण ज्ञान शब्द से अनुविद्ध है और शब्द से ही प्रकाशित होता है।[१] भर्तृहरि वाक्यपदीय में सर्वप्रथम शब्दब्रह्म का निरूपण करते हैं और स्पष्टत: कहते हैं कि शब्दब्रह्म की प्राप्ति के लिए व्याकरण ही एकमात्र माध्यम है।[२] शब्दतत्त्व के सम्यक् ज्ञान में षडङ्गों की परम अपेक्षा होती है। इन षडङ्गों में व्याकरण को मूल कहा गया है : "मुखं व्याकरणं स्मृतम्।"[३]

जिस प्रकार शरीर की अवस्थिति मुख पर ही निर्भर है, उसी प्रकार वेद का सम्पूर्ण ज्ञान व्याकरण पर ही निर्भर है। शब्दब्रह्म का निकटतम साधन व्याकरण है।

व्याकरण-वाङ्मय के सरलतम अध्ययन के लिए तथा संक्षेपवृत्ति के मार्ग का अनुसरण करने के लिए व्याकरणविदों ने प्राविधिक पदों का निर्माण किया है। प्राविधिक पद वे हैं, जो निश्चित अर्थ के बोधक हैं। शब्द तो अनेकार्थक होते हैं, किन्तु वे शब्द जो बहुत से अर्थों को धारण करते हुए भी किसी निश्चित अर्थ विशेष में स्थिर हो जाते हैं, उन्हें प्राविधिक (कृत्रिम) शब्द कहा जाता है। इन्हीं प्राविधिक शब्दों के लिए ही 'संज्ञा' शब्द का प्रयोग किया जाता है।

व्याकरणशास्त्र में संज्ञा की कितनी महत्ता है, इसका अनुमान इसी से लगाया जा सकता है कि भट्टोजिदीक्षित ने वैयाकरणसिद्धान्तकौमुदी में सर्वप्रथम संज्ञाप्रकरण का ही निरूपण किया है।

## संज्ञा शब्द की व्युत्पत्ति

संस्कृत वैयाकरणों ने 'संज्ञा' शब्द को दो प्रकार से व्युत्पन्न करने का प्रयत्न किया है। **प्रथम व्युत्पत्ति**-सम् उपसर्गपूर्वक ज्ञा अवबोधने धातु से करणार्थ में 'संज्ञायतेऽनयेति संज्ञा' इस अर्थ में 'आतश्चोपसर्गे'[४] सूत्र से 'क' प्रत्यय करने पर ॐ सम्+ज्ञा+क इस स्थिति में 'आतो लोप इटि

---

१ वाक्यपदीय, १.१

२ वही, १.११

३ पाणिनीय शिक्षा , श. ४१

४ अष्टाध्यायी - ३.३.१०६

च"[५] सूत्र से आकारलोप करके 'संज्ञ' बनने पर 'अजाद्यतष्टाप्'[६] सूत्र से टाप् और सवर्णदीर्घ करने पर संज्ञाशब्द निष्पन्न होता है। 'संज्ञायते अनया इति संज्ञा' इस व्युत्पत्ति के अनुसार 'संज्ञा' का अर्थ है सम्प्रत्यय या ज्ञान करवाने वाला साधन या नाम।[७]

**द्वितीय व्युत्पत्ति** - सम् उपसर्गपूर्वक ज्ञा धातु से भाव अर्थ में उपर्युक्त सूत्र से ही क प्रत्यय, आकारलोप एवं टाप् प्रत्यय करने पर 'संज्ञा' शब्द निष्पन्न होता है - 'संज्ञायते इति संज्ञा'। इस व्युत्पत्ति के अनुसार संज्ञाशब्द किसी रूढ अर्थ का प्रत्यायक होता है। जैसे पञ्चालाः, कुरवः आदि।

**संज्ञाओं का प्रयोजन** - व्याकरणशास्त्र में सर्वत्र शब्दव्यवहार लाघव को ध्यान में रखकर किया जाता है, उसमें भी संज्ञाशब्दों का निर्धारण तथा उनका प्रयोग लाघव की चरमसीमा को अभिव्यक्त करता है। पतंजलि के 'संज्ञा च नाम यतो न लघीयः'[८] इस वचन पर अपना विवरण प्रस्तुत करते हुए उक्त विषय को प्रदीप में कैयट ने इस रूप में स्पष्ट किया है - 'शब्दव्यवहारो लघुस्ततोऽपि लघीयो नाम'[९] अर्थात् प्रथम तो शब्दव्यवहार ही लाघव के लिए होता है, किन्तु उसमें भी सर्वोत्तम लाघव संज्ञाशब्दों में दृष्टिगोचर होता है। इसी कारण लघु उपाय से ईप्सित बात समझाने के लिए संज्ञाशब्दों का प्रयोग शास्त्रों में किया जाता है, फिर व्याकरणशास्त्र तो अपने लाघव के लिए प्रसिद्ध होने के कारण उसमें तो संज्ञाशब्दों के बिना निर्दिष्ट कार्यों का विधान असम्भव सा प्रतीत होता है। यह लाघव भी दो प्रकार का होता है- शब्दकृत और अर्थकृत। अर्थकृत लाघव में वर्णसंक्षेप अपेक्षित नहीं होता और इसमें कभी-कभी वर्णबाहुल्य भी हो जाता है किन्तु इस वर्ण बहुलता का आश्रय किसी विशिष्ट अर्थ के द्योतन के लिए होता है। शाब्दीसंज्ञा में शब्दकृत लाघव पर ध्यान दिया जाता है। अतः संज्ञाशब्दों की व्याकरणशास्त्र में नितान्त आवश्यकता है। उसके बिना व्याकरणशास्त्र की परिकल्पना ही असम्भव प्रतीत होती है। संज्ञाशब्दों के ज्ञान से सम्पूर्ण वर्णित विषय का बोध सम्भव हो जाता है। ग्रन्थ में केवल एक स्थल पर विस्तृत अर्थ को प्रकट करने वाले एक पारिभाषिक अथवा संज्ञाशब्द का विधान कर दिया जाता है[१०] और ग्रन्थ में जहां-जहां उस अर्थ को प्रकट करना अभीष्ट होता है, वहाँ-वहाँ उस छोटे से संज्ञाशब्द का उल्लेख कर दिया जाता है। संज्ञाशब्द जिस अर्थ विशेष के बोधक होते हैं, संज्ञाशब्द के कथन मात्र से ही उस सम्पूर्ण अर्थविशेष का ज्ञान हो जाता है। सूत्र की परिभाषा के अनुसार सूत्र अल्पाक्षर होने चाहिएं। इस प्रयोजन को संज्ञाशब्द पूर्णतः सार्थक करते हैं। यही कारण रहा है कि पाणिनि से पूर्ववर्ती, पाणिनि तथा पाणिनि से उत्तरवर्ती वैयाकरणों में संज्ञाशब्दों की लोकप्रियता रही है तथा उनका प्रयोग प्रचुर मात्रा में किया गया है।

---

५ वही ६.४.६४

६ वही ४.१.४

७ संज्ञा सम्प्रत्यय उच्यते -अष्टा. १.१.६७ पर महाभाष्य पर प्रदीप।

८ महाभाष्य-१.१.२७

९ महाभाष्य, प्र. १.१.२७

१० पाणिनीय सूत्रपाठ तथा जैनेन्द्र सूत्रपाठ का तुलनात्मक अध्ययन, पृ. २९

